* श्रीगणेशोविजयतेतराम्

अथ

# पंचपंचाशिका प्रारभ्यते



आदौ मंगलाचरणम्।

सर्वसिद्धिप्रदातारं *हर्तारं विघ्नसंहतिम्।
एकदन्तं कृपागारं गणराजं नमाम्यहम् ॥१॥
प्रोल्लसद्रुचिरपाणिपंकज-
संस्थापिताऽमलविपंचिका यया।
संविधाय हृदि सम्विदाश्रये
वन्दनं हि कलुषापहं गिरः ॥२॥
रम्यकर्णपुरस्थेन मणिलालेन शर्मणा।
संप्रदीता सतांप्रीत्यै पञ्चपञ्चाशिका शुभा ॥३॥

भाषा—सम्पूर्ण सिद्धि देनेवाले विघ्नवृन्द हरनेवाले दयाधाम एकदन्त-गणेशजीको मैं नमस्कार करता हूँ ॥ १ ॥ जिस

---

* न लोकाव्ययनिष्ठाखलर्थतृनामिति सूत्रेण तृचप्रत्ययान्तयोगे षष्ठी निषेधः।

सरस्वती द्वारा निर्मल वीणा शोभित सुन्दर हस्त कमलमें स्थापन की गई है उस भारतीकी, पाप दूर करनेवाली वन्दना ज्ञानोपत्तिके लिये हृदयमें धारण कर ॥२॥ रम्य कान-पुर ( चौक ) निवासी मन्नीलालसे (मिश्र) शुभ पञ्चपञ्चाशिका संग्रह की गई ॥३॥

## विवाहस्य द्वितीये दिनेनिशि वाच्यम् ।

विवाहके दूसरे दिन (कचौरीमें) रातको कहना चाहिये ।

### वरपक्षे पद्यम् ।

त्वामाहूय कृतन्न किञ्चिदमलं
पादार्चनं सेवनं
नोदत्तं वरवास सौख्यनिरतं
चान्नं ह्यलेह्यं खलु ।
दत्तं किंशुकपत्र क्षुद्र पुटकै-
स्त्वंवञ्चितो यन्मया
क्षन्तव्यो हि त्वयाकृपालय यतः
संलज्जितास्मो वयम् ॥१॥

टीका—हे सम्बन्धिन् ! त्वाम् आहूय मया किंचित् अमलं (निर्म्मलं) पादार्चनं सेवनं च न कृतं तथा च सौख्यनिरतं वरवासं नैव दत्तं किं च खलु (इति निश्चयेन) अलेह्यं (निस्वादं)

अन्नं यत्किञ्चित् क्षुद्र किंशुक (पलाश) पत्रपुटकैः दत्तं ते न त्वं मया संचितः हे कृपालय तदपराधम् मे कृपया क्षमस्व यतः संलज्जितास्मः इत्याशयः ॥१॥

भाषा—हे सम्बन्धीजी आपको अपने यहाँ बुलाकर हमने पादार्घन सेवा नहीं की तथा सुखदायक निवासस्थान (जनवास) भी नहीं दिया किन्तु निश्चय करके निस्वाद अन्न जो कुछ पलाशकी छोटी दोनियोंमें अर्पण किया इससे आप ठगे गये। अतएव हे कृपागार हमारे अपराधको क्षमा कीजिये और इसीसे हम बहुत लज्जित हैं ॥१॥

## कन्यापक्षे पद्यम् ।

आयाते तव मन्दिरे बहुविधैरासादितैराशनैः
पीयूषाकरनिर्गतैरपि जलैर्मार्गश्रमो दूरतः ।
कर्पूरान्वितभोजनैस्सुखप्रदैस्सन्तर्पिताःसज्जनाः
सौजन्यं त्वदुदारतांपुनरहो वक्तुं न शक्तावयम् २

टीका—हे सम्बन्धिन् ! तव मन्दिरे (गृहे) आयाते (आगते) सति बहुविधैः आसनैः आसादितैः (सम्पादितैः) पीयूषाकर निर्गतैः जलैः अपि अस्माकं मार्गश्रमः दूरतः कोर्थः दूरंगतः सज्जनाः (जायन्ते इतिजनाः सन्तश्च ते जनाः) सुखप्रदैः कर्पूरान्वितभोजनैः सन्तर्पिताः अहो युष्माकं सौजन्यत्वं पुनः उदारतां (उदारस्यभावः उदारता तां) वक्तुं वयं न शक्ताः (न समर्थाः) इत्याशयः ॥ २ ॥

भाषा—हे सम्बन्धीजी, आपके स्थानमें प्राप्त होते ही अनेक प्रकारके एकत्र किए हुए आसनोंसे सत्कार किया गया एवं पीयूष ( अमृत ) की खानिसे निकले हुए जलोंसे हमारा मार्गश्रम दूर हुआ तथा सुखदायक कर्पूर सुगंधिपूर्ण भोजनोंसे आपने भक्तोंको सन्तुष्ट किया अतएव ( इस-लिये ) आपकी सुजनता और उदारता वर्णन करनेको हम लोग असमर्थ हैं।२।

कन्यापक्षे संस्कृत गद्यम् ।

एकदा यदुवंशावतंस कंसकालो भक्तपालः श्रीकृष्णचन्द्रो विदुरस्याश्रमंगतस्तत्रोत्तम वस्त्व भावादग्रतो निर्लवणं शाकं निवेद्य विदुरो मृदुवचनैः श्रीकृष्णस्य स्तुतिं कृतवान् तथा वयमपि भवतां स्तुतिं कुर्मः ।

भाषा—एक समय यदुवंशभूषण कंसकाल भक्तरक्षक श्रीकृष्णचन्द्रजी विदुरके स्थानमें गये, वहां उत्तम पदार्थके अभावसे विदुरने विना लवणका शाक आगे धर कृष्णजीकी स्तुति की, वैसे ही हम लोग भी आपकी प्रार्थना करते हैं ।

पद्यम् ।

आयातोऽसि ममाङ्गणे यदुपते
मत्पूर्वपुण्योदयाद्-
ध्यानाधिष्ठितमानसैर्मुनिगणै
र्ध्यातोऽपि न ध्यानगः ।

शाकं निर्लवणं निवेद्य
पुरतस्तस्माच्च लज्जामहे
भोज्यं स्वादुतरं तदेव
भवता *गीतोक्तमाविष्कृतम् ॥३॥

टीका—हे यदुपते, मत्पूर्वपुण्योदयात् त्वम् ममांगणे आ-यातः ( आगतः ) असि च, पुनः ध्यानाधिष्ठितमानसैः मुनि-गणैः ( मुनीनां गणः समूहः तैः ) ध्यातः अपि ध्यानगः न आ-यातः भवत्पुरतः निर्लवणं शाकं निवेद्य तस्मात् हेतोः वयं लज्जामहे भवता स्वादुतरं भोज्यं भुक्तं अनेन गीतोक्तं आवि-ष्कृतमित्याशयः ॥ ३ ॥

भाव—हे कृष्ण भगवान्, हमारे पूर्वपुण्योदयसे आप हमारे आँगनमें आये हो फिर आप कैसे हो कि ध्यानमें लगाये हैं मन जिन्होंने ऐसे मुनियों के चिंतवन करनेसे भी ध्यानमें नहीं आते, ऐसे आपके आगे अलोना शाक धरकर हम लज्जाको प्राप्त हैं परन्तु आपने वही शाक अत्यन्त स्वादिष्ट भोजन की तरह पाकर गीतोक्त (गीता में कहे हुए) वाक्यको प्रकट (विख्यात) किया। ( आप धन्य हैं) ॥३॥

---

* पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृत मश्नामि प्रयतात्मनः।
—गीता

जो कोई पत्र पुष्प फल जल मुझको भक्तिसे अर्पण करता है मैं उस शुद्धात्मा भक्तके दिये हुए पदार्थको स्वीकार करता हूँ।

वरपक्षे पद्यम् ।

तथैतस्यां समज्यायां यस्यां सतत शास्त्र-परिशीलना वाप्तधिषणातिशय प्रकर्षाः अनु दिवस मनुभावितांशुतांघ्रि पद्म मकरन्द पान पूतान्तरात्मानस्तथा त्र यमनियम शम दम धारणा ध्यान तितिक्षोपरति समाध्यादि-योगांगैर्विनिर्जितारिषड्वर्गाः किं च सदैव स्वाध्यायानुष्ठान तत्परतया संपादित तेजसो दिक्षु विदिक्षुच विस्तृतोज्वल कीर्तय एतादृशः श्रीमन्त इमां संसदमलं कुर्वन्ति तदा तेषामग्रे मादृशोऽल्पमेधसो धीरशक्तप्रायैव परन्तु भव-द्दर्शन संजाताह्लादेन मे वाणी मुखरायतेऽतो ऽहमेकेन पद्येन भवतां विज्ञप्तिं करोमि ।

टीका—शास्त्राणां परिशीलनं शास्त्रपरिशीलनं, सततं यच्छास्त्र परिशीलनं, सततशास्त्र परिशीलनं, सतत शास्त्रपरि-शीलनेन अवाप्तः सतत शास्त्र परिशीलनावाप्तः, धिषणायाः अतिशयश्चासौप्रकर्षः धिषणातिशय प्रकर्षः, सतत शास्त्र परि-शीलनावाप्तो धिषणातिशय प्रकर्षो यैस्ते सतत शास्त्र परिशी-लनावाप्त धिषणातिशय प्रकर्षाः, दिवसं दिवसं इत्यनुदिवसं,

अनुभावितश्चासावाशुतोषः अनुभावित आशुतोषः, आशुतोषस्यांघ्री पद्मे इव इत्याशुतोषांघ्रि पद्मे, अनुभाविते कोर्थः विचिन्तिते च ते आशुतोषांघ्रि पद्म इति अनुभाविताशुतोषांघ्रि पद्मे, तयोर्मकरंदः, तस्य पानेन, पूतोन्तरात्मा येषान्ते अनुभाविताशुतोषांघ्रि पद्ममकरन्द पानपूतान्तरात्मानः, यमश्च नियमश्च शमश्च, दमश्च धारणाच ध्यानंच तितिक्षाचोपरतिश्च समाधिश्च ते आदिर्येषां ते, षण्णां कामादीनां वर्गः षड्वर्गः, विनिर्जितः अरीणां षड्वर्गोयैस्ते विनिर्जितारिषड्वर्गा, सदैव निरन्तरं यत्स्वाध्यायस्य वेदविहित कर्म्मणोऽनुष्ठानं तस्मिन् तत्परं तया संपादितं तेजो यैस्ते, सदैव स्वाध्यायानुष्ठानतत्परतया सम्पादित तेजसः, दिक्षु दिशासु विदिक्षु विदिशासु च विस्तृता उज्वला कीर्तिर्येषां ते दिक्षुविदिक्षुच विस्तृतोज्वल कीर्तयः ।

भाषा—इस सभामें जिसमें कि निरन्तर शास्त्राभ्याससे प्राप्त हुई बुद्धि से अत्यन्त श्रेष्ठ और प्रतिदिन ध्यान में आये हुए शिवजीके चरणकमलके मकरन्द-पानसे पवित्र आत्मवाले और यम, नियम, शम, दम, धारणा, ध्यान, तितिक्षा, उपरति, समाधि आदि योगके अंगोंसे जीता है काम क्रोधादि शत्रु षड्वर्ग जिन्होंने और सदा स्वाध्याय के अनुष्ठानमें तत्परतासे अत्यन्त तेजस्वी दिशाओं और विदिशाओं में फैली हुई उज्वल कीर्तिवाले ऐसे श्रीमान् आप लोग इस सभाको आभूषित कर रहे हैं । आपके सामने मुझ अल्पज्ञकी बुद्धि असमर्थ ही के सदृश है परन्तु आपके दर्शनसे उत्पन्न जो आनन्द है उसीसे मेरी वाणी वाचाल होती है । इससे मैं एक श्लोकसे आप लोगों की प्रार्थना करता हूं ।

पद्यम्।

लक्ष्मीस्ते द्विजकामगौस्तु निलये
वर्वर्ति कल्पद्रुमः
किं दैवीत्वणिमादिकावसति किं
सिद्धिर्हि नः संभ्रमः
स्वाद्वन्नञ्च सुधादिकं समभवद्
द्वै मिष्टपथ्याशिनां
सम्बन्धे भवतां सुरद्रुम समे
कांक्षेन नाकादिकम् ॥४॥

टीका—हे द्विज! (द्वाभ्यां जन्मसंस्काराभ्यां जायते इति द्विजः तत्सम्बुद्धौ) ते निलये (तव भवने) किं लक्ष्मीः, कामगौः (सुरधेनुः) कल्पवृक्षः वर्वर्ति तु, पुनः। किम् अणिमादिका दैवीसिद्धिः निवसति हि (निश्चयेन) नः अस्माकं संभ्रमः अस्ति मिष्ट पथ्याशिनां अस्माकं स्वाद्वन्नं सुधादिकं समभवद्-स्मात्कारणात् सुरद्रुमसमे (कल्पवृक्षतुल्ये) भवतां सम्बन्धे अहं नाकादिकं न कांक्षे (नेच्छामि) इत्याशयः ॥४॥

टीका—हे द्विज, क्या आपके भवन में लक्ष्मी व कामधेनु या कल्पवृक्ष वर्तमान है तथा क्या अणिमादिक अष्टसिद्धियां बसती हैं, निस्सन्देह हमको यह भ्रम (धोखा) है कि मधुर और रुचिकारक भोजन करनेवाले हम

लोगोंको आपके यहाँ अमृत समान स्वादिष्ट भोजन मिला, इसलिये कल्प-वृक्ष तुल्य आपका सम्बन्ध होनेसे हम स्वर्गादिकी भी इच्छा नहीं करते ॥ ४॥

कन्यापक्षे संस्कृतम्।

कस्मिंश्चित्कालेह्येको हंसो निखिलानम्भो निवेशान् पश्यन् सन् भूमिं भ्रमित्वा किञ्चिदल्प पल्वलमभ्यगात् तदा तडागः सहसोत्थाय हंसस्याग्रेऽञ्जलिम्बद्ध्वा हंसस्य नोचितां वस्तु-सामग्रीमुपेक्ष्य केवल वाङ्मात्रेण विज्ञापय-न्नाह तथैव वयमपि भवतां स्तुतिं कुर्म्मः।

भाषा—किसी समय एक हंस सब तालाबोंको देखता हुआ और पृथ्वीपर फिरता हुआ किसी छोटे तड़ाग के समीप आया। तब तड़ाग सहसा अर्थात् एक बारगी उठकर हंसके सामने कर जोड़ हंसके भेंटके योग्य कोई अच्छी चीज अपने पास न जानकर केवल वचनोंसे हंसकी प्रार्थना करता हुआ बोला। वैसेही हम भी आपकी विज्ञप्ति (स्तुति) करते हैं।

हंसत्वं सुरसुन्दरीगतिगुरुर्गङ्गातरङ्गावली-
निर्धौतांघ्रिरपारमानससरोवासी विहङ्गाधिपः।
न क्षीरं न च मौक्तिकं न च
सुधा नाम्भस्सु जातं क्वचि-

नैकेनाञ्जलिना कथङ्कथमहो
कुर्यां सपर्यां तव ॥५॥

टीका—हे हंस, त्वं सुरसुन्दरीगतिगुरुः ( सुराणां देवानां सुन्दर्य्यः स्त्रियः सुरसुन्दर्य्यः सुरसुन्दरीणाम् गतिः सुरसुन्दरीगतिः सुरसुन्दरीगतेर्गुरुरिति सुरसुन्दरीगतिगुरुः) कीदृशस्त्वं गंगातरंगावलीर्निर्धौताङ्घ्रिः, गंगायास्तरंगाः गंगातरंगाः (वीचयः) गंगातरंगाणाम् अवलयः ( पंक्तयः ) गंगातरंगावलयः गंगातरंगावल्यां निर्धौतौ अंघ्री (चरणौ) येन सः गंगातरंगावलीनिर्धौतांघ्रिः । पुनः कीदृशस्त्वं अपारमानस सरोवासी, पुनः कीदृशस्त्वं *विहंगाधिपः ( विहायसा, आकाशेनागच्छंति ये ते विहंगाः तेषां अधिपः कोर्थः पक्षिणां स्वामी) मत्समीपे क्षीरं न च ( पुनः) मौक्तिकं (मुक्ता) न सुधा अपि न क्वचित् अम्भस्सु ( जलेषु ) जातं( उत्पन्नं कमलं ) न च (पुनः) अहो ( इति आश्चर्ये ) एकेन अंजलिना तव सपर्य्यां ( सेवां ) कथं कुर्य्याम् कथमपि न कर्तुं शक्तः इत्याशयः ॥ ५ ॥

भाषा—हे हंस तुम सुरोंकी स्त्रियोंकी गतिके गुरु हो अर्थात् तुम्हारी ही चाल की शिक्षासे देवांगना हंसगमनी कहलाती हैं । तुम कैसे हो कि गंगाकी तरंगों ( लहरों ) की श्रेणियोंमें तुमने पांव धोये हैं, फिर कैसे तुम हो कि अपार मानस सरोवरके निवासी हो, फिर कैसे तुम हो कि पक्षियोंके अधिप हो, ऐसे आपकी सेवाके योग्य हमारे पास न दूध है, न मोती है, न

* खगे विहंग विहग विहंगम विहायसः—इत्यमरः ।

अमृत है न कोई कमल है इसलिये हम बहुत चकित हैं कि केवल एक अंजली जलसे आपका सत्कार किस २ भांति करें अर्थात् किसी प्रकार भी करनेको समर्थ नहीं हैं ॥ ५ ॥

## वरपक्षे संस्कृतगद्यम् ।

भो भो महानुभावाः । धन्योऽद्य समयो यतोऽस्मिन् काले एषा परमाह्लादप्रदा प्रचुर सुषमोपेता सभा विराजते, एतादृशीं समितिम्वीक्ष्य सुधर्मापि व्रीडामनुयाति यस्यां समितौ श्रीमन्नारायणकृपाकटाक्षावास सन्मति समस्त विपश्चिद्वृन्दवन्दित चारु चरणारविन्द शेष विशेषार्थ विचारकामलकीकृत समस्त जातवाद प्रतिवादीन्द्र विलसित पदार्थाब्ज प्रकाशानाम्व्याकरणतर्क न्यायमीमांसा शास्त्रज्ञ सुधीसंघात प्रशंसित वाचां समक्षे प्रणतिपुरस्सरं प्रार्थनात्मकमेकं पद्यम्ब्रवीमि तद्भवद्भिः सावधानतया श्रूयताम् ।

भाषा—हे महानुभावो ! आजका समय धन्य है जिसमें कि परम हर्ष दायक अत्यन्त शोभावाली यह सभा विराजमान है, ऐसी सभाको देख कर

देवसभाभी लज्जित होती है, जिस सभामें श्रीमन्नारायणकी कृपा कटाक्षसे प्राप्त सुन्दर बुद्धिवाले तथा सम्पूर्ण विद्वद्वृन्दोंसे वंदना किये गये हैं चारु चरणारविन्द जिनके और शेष विशेष अर्थको विचार करनेवाले एवं करामलक हो रहा है, अखिल जालवाद जिनको तथा प्रतिवादियोंमें सुशोभित है पदार्थ रूपी पंकजकी प्रफुल्लता जिनकी, और व्याकरण तर्क न्याय मीमांसा शास्त्र जाननेवाले पंडितोंसे प्रशंसित वचनोंवाले ऐसे आप लोगोंके सामने नम्रतापूर्वक हम एक विनायात्मक श्लोक कहते हैं जिसे आप लोग सावधान हो सुनिये ।

पद्यम् ।

सौवर्णं मणिमण्डितं तव तटं मुक्ताफलैर्गुम्फितं
नीरं क्षीरसमं सुभोज्यममलं राजीवगन्धोत्कटम्।
नानादेशविहङ्गमागमने कोलाहलं कुर्वता-
मित्थं हर्षमनित्यमेव सुखदं धन्यस्तडागाधिपः।६

टीका—हे सम्बंधिन् ! तव तटं ( समीपं ) सौवर्णं ( कांचनमयम् ) अस्ति कीदृशं तटं मणिमंडितम् ( मणिना भूषितं ) पुनः कीदृशं तटं मुक्ताफलैः गुम्फितम् च ( पुनः ) नीरं क्षीरसमं ( क्षीरेण दुग्धेनसमं क्षीरसमं ) अमलं ( स्वच्छं ) सुभोज्यं स्वादुतरं, पुनः कीदृशं तटं राजीवगंधोत्कटं ( कमलसुगंधिपूरितं ) तथा नाना देश विहङ्ग मार्गगमने कोलाहलं कुर्वताम् इत्थं अजस्रं ( निरंतरं ) हर्षम् एव सुखदं तडागाधिपः धन्यः, इत्याशयः ॥ ६ ॥

भाषा—हे सम्बंधिन्! आपका तट (समीप) कैसा है, सुवर्णमय है। फिर कैसा है तट मणिजटित सुशोभित है, फिर कैसा है मोतियोंसे गुम्फित (गुँथा) है और जिसमें दूधके सदृश स्वच्छ जल अति स्वादिष्ट पीनेके लायक भरा हुआ है फिर कैसा है कि कमलोंकी सुगंधिसे सुगंधित है और विविध देशके पक्षी जिस शब्द होकर बोलते हुए जाते हैं इस प्रकार सदा सुदमय सुखदायक तड़ागोंके स्वामी आपका तट धन्य (प्रशंसनीय) है ॥ ६ ॥

नागो भाति मदेन कं जलरुहैःपूर्णेन्दुना शर्वरी
शीलेन प्रमदा जवेन तुरगो नित्योत्सवैर्मंदिरम्।
वाणी व्याकरणेन हंसमिथुनैर्नद्यस्सभा पंडितैः
सत्पुत्रेण कुलं नृपेण वसुधा लोकत्रयं विष्णुना॥ ७॥

टीका—हे सम्बंधिन्! नागः (हस्ती) मदेन भाति (राजते) जलरुहैः (कमलैः) कं (जलं) भाति, शर्वरी (निशा) पूर्णेन्दुना भाति प्रमदा (स्त्री) शीलेन भाति तुरगः (तुरेण वेगेन गच्छतीति, अश्वः) जवेन भाति मन्दिरं (गृहं) नित्योत्सवैः (उत्साहैः) भाति वाणी व्याकरणेन भाति नद्यः *हंसमिथुनैः भान्ति पंडितैः सभा (समानैर्भाति या सा) भाति कुलं सत्पुत्रेण भाति वसुधा नृपेण (नॄन्मनुष्यान्पातीति नृपः तेन) भाति लोकत्रयं विष्णुना (वेवेष्टि विश्वं व्याप्नोतीति विष्णुः तेन) भाति, तथैव भवता सम्बन्धेन वयमपि भामः (शोभामहे) ॥ ७ ॥

भाषा—हे सम्बन्धीजी, जैसे हाथी मदसे सुशोभित होता है और जल

* स्त्रीपुंसौ मिथुनं द्वन्द्वमित्यमरः।

कमलोंसे, तैसेही रात्रि पूर्ण चन्द्रमासे, स्त्री ( शील ) स्वच्छ आचरणसे, घोड़ा वेग ( तेजी ) से, गृह नित्यके उत्सवाहोंसे, वाणी व्याकरणसे नदियां हंसके जोड़ोंसे शोभायमान होती है, सभा पंडितोंसे, कुल सुपूतसे, पृथ्वी-राजासे, तीनों लोक विष्णु भगवानसे शोभित होते हैं वैसेही आपके साथ सम्बन्ध होनेसे हम लोग भी शोभायमान हो रहे हैं ॥ ७ ॥

वरपक्षे पद्यम् ।

पयसा कमलं कमलेन पयः
पयसा कमलेन विभाति सरः
मणिना वलयं वलयेन मणि-
र्मणिना वलयेन विभाति करः ।
शशिना च निशा निशया च शशी
शशिना निशया च विभाति नभः
भवता च सभा सभया च भवान्
भवता सभया च विभाम वयम् ॥८॥

टीका—हे सम्बंधिन् ! पयसा ( वारिणा ) कमलं विभाति ( शोभते ) कमलेन जलं ( पयः ) विभाति ( विशेषेण राजते ) पयसा कमलेन सरः ( तडागः ) विभाति, मणिना वलयं विभाति वलयेन कोर्थः कंकणेन मणिर्विभाति, मणिना वलयेनच करः विभाति, च ( पुनः ) शशिना ( चन्द्रमसा ) निशा ( रजनी )

विभाति, निशया शशि विभाति, शशिना च ( पुनः ) निशया नभः ( गगनं ) विभाति, च (पुनः) भवता सभा विभाति सभया च भवान् विभाति भवतां सभयाच वयं विभामः ॥ ८ ॥

भाषा—हे सम्बन्धिन् ! जलसे कमल शोभित होता है, कमलसे जल, जल और कमलसे तड़ाग शोभित होता है; मणिसे कंकण कंकणसे मणि, मणि और कंकणसे हाथ शोभित होता है; चन्द्रमासे रात्रि, रात्रिसे चन्द्रमा, चन्द्रमा और रात्रिसे आकाश सब शोभित होता है,-आपसे सभा शोभित है सभासे आप शोभायमान हैं आप और आपकी सभासे हम सब भी शोभायमान हो रहे हैं ॥ ८ ॥

## विवाहस्य तृतीयदिने दिवानिमंत्रणे वाच्यम् ।

विवाह के तीसरे दिन बरात निमन्त्रण के समय कहना चाहिये ।

### कन्यापक्षे संस्कृत गद्यम् ।

यत्राऽनेकधा विद्यावेत्तारो वेद व्याकरण न्यायकाव्य कोशादीनांच तथाऽल्पज्ञानां पंडितानाम्मानहारिणस्सभाचातुराः सज्जना उपस्थितास्सन्ति अन्यच्च सत्यशील क्षमादयादि भावं बिभ्रतो भवन्तः तत्रपूर्वोक्तानामग्रे मादृशानां गुणरहितानां तुच्छमनुष्याणां का गणनाऽस्ति तथापि भवद्दर्शनादस्माकं चित्तेषु

परमानंदोजातोऽतः कारणात् स्तुतिरूपैकां पुष्पांजलिं निवेदयामः स च कृपया भवद्भिः श्रूयताम् ।

भाषा—जहां पर विविध प्रकार की विद्या-वेद वेदांग व्याकरण न्याय काव्य कोशादिकोंके ज्ञाता और अल्पमति पंडितोंके मान हरनेवाले सभा चतुर सज्जन उपस्थित हैं और सत्यशील क्षमा दया आदि भावोंसे भरे हुए हैं वहां हम सदृश गुणहीन तुच्छ पुरुषोंकी क्या गिनती है; तौभी आपके दर्शन से हम सबोंके चित्तमें परम आनन्द उत्पन्न हुआ, इस कारण प्रार्थना रूपी एक पुष्पांजलि आपको निवेदन करते हैं, उसे कृपापूर्वक आप लोग सुन लीजिये ।

पद्यम् ।

एतत्सभान्तर्गतपण्डिताग्रे
वक्तुं समर्थोऽपि न भारतीशः ।
तथापि श्रीमद्भवतां प्रसादात्-
ब्रवीमि पद्यं खलु धार्ष्ट्यतोऽहम् ॥१॥

टीका—एतत्सभान्तर्गत पंडिताग्रे ( एषा चासौ सभा एतत्सभा एतत्सभान्तर्गताश्चते पंडिताः एतत्सभान्तर्गतपंडिताः एतत्सभान्तपंडितानामग्रं (समक्षं) तस्मिन् एतत्सभान्तर्गत पंडिताग्रे भारतीशः ( ब्रह्मा ), अपि (निश्चयेन) वक्तुं न समर्थः तथापि श्रीमद्भवतः (श्रीर्विद्यते इति श्रीमान् श्रीमांश्चासौ भवान्

श्रीमद्भवान् तस्य श्रीमद्भवतः) प्रसादात् खलु धाष्टर्यतः अहं (एकं) पद्यं ब्रवीमि (वच्मि) ॥९॥

भाषा—इस सभाके पंडितोंके आगे आपकी कीर्ति वर्णन करनेको ब्रह्मा भी समर्थ नहीं हैं तथापि (तौभी) आपकी प्रसन्नतासे निस्सन्देह धृष्टतापूर्वक हम एक श्लोक कहते हैं ॥९॥

श्रीमन्निमन्त्रणकृतोत्सवमागताः स्मो
व्रीडामसत्कृतभवामधिगम्य मूकाः।
युष्माकमंघ्रिकमलोदकशुद्धिकामा
विज्ञापयन्ति वसुधा भवनांगणस्य ॥१०॥

टीका—हे लक्ष्मीवन्! श्रीमन्निमंत्रणकृतोत्सवं (श्रीरस्ति येषां ते श्रीमन्तः तेषां श्रीमतां निमंत्रणं श्रीमन्निमंत्रणं श्रीमन्निमंत्रणे कृतः उत्सवः इति श्रीमन्निमंत्रणकृतोत्सवः तं) वयं आगताः स्मः असत्कृतभवां व्रीडां कोर्थः लज्जां अधिगम्य कोर्थः प्राप्य वयं मूकाः (मौनधारिणः) ननु मूकाः इत्याशयः, एतेन असत्कारेण कृता लज्जा दरीदृश्यते, किन्तु भवनांगणस्य (भवनस्य गृहस्य अंगणं अजिरं इति भवनांगणं तस्य) वसुधा (वसूनि धनानि दधातीति) युष्माकं विज्ञापयन्ति कोर्थः विज्ञप्तिं कुर्वन्ति, कीदृश्यः वसुधा अंघ्रिकमलोदकशुद्धिकामाः (अंघ्रिचरणमेव कमलं अंघ्रिकमलं अंघ्रिकमलस्य उदकं जलं इति अंघ्रिकमलोदकं अंघ्रिकमलोदकेन शुद्धिं कोर्थः पवित्रतां कामयन्ते

२

इति अंघ्रिकमलोदकशुद्धिकामाः ) अस्माकं गृहे भवदागमनं विनयेन प्रार्थयंत । इत्याशयः ॥ १० ॥

भाषा—हे मन्मथजित् ! आप लोगोंके निमंत्रण ( न्यौता ) करनेके उत्सवमें हम सब आये हैं, परन्तु आपका सन्मान ठीक न हो सका इसलिये असन्मानसे प्रकट हुई लज्जासे हम लोग मूक अर्थात् मौन हो रहे हैं किन्तु हमारे गृहके आंगनकी भूमि आपकी स्तुति करती है। भूमि कैसी है कि आपके पद कमलका जो जल उससे शुद्ध (पवित्र) होनेकी इच्छा है। जिसकी वह हमारे स्थानमें आपके आगमनकी नम्रतापूर्वक विनती करती हैं (अतः आपको अवश्य पधारना चाहिये ) ॥१०॥

वरपक्षे संस्कृत गद्यम्

अस्यां सभायां परमविदुषां पंडितानामवाच्यं कर्तुंशीलिनस्तथा कांतिमन्तः सम्पूर्णैर्गुणैरुल्लसितास्सभाचातुरा महोदया उपस्थितास्सन्ति तेषामग्रे क्षुद्रपुरुषोऽहम् किञ्चिद्वक्तुं कथं शक्नुयाम् तथापि शिष्टाचारपरिपालनायैकेन श्लोकेन भवतां प्रार्थनां करोमि स्याद् भवद्भिः श्रूयताम् ।

भाषा—इस सभामें परम विद्वान् पण्डितोंको मौन करनेवाले शोभायमान सकलगुणनिधान सभाचतुर महोदय विराजमान हैं इनके आगे मैं क्षुद्र पुरुष कहनेको किस प्रकार समर्थ हो सकता हूं तो भी शिष्टाचार पालन करनेके लिये एक श्लोकसे आपकी स्तुति करता हूं उसे आप सुनिये ।

पद्यम्।

येः कीर्त्या धवलीकृतं त्रिभुवनं श्यामीकृतं चाम्बरं
धूमैरध्वरसम्भवैः प्रतिदिनं दानैर्द्विजास्तोषिताः।
शिक्षासंस्कृतया गिरा प्रतिदिनं यैस्तोषिताः पंडिता-
स्तैर्भक्त्या विनिमंत्रितास्तदधुना धन्या धरण्यां वयम्

टीका—भोः सम्बन्धिन्। यैः कीर्त्या (यशसा) त्रिभुवनं (त्रैलोक्यम्) धवलीकृतं च (पुनः) यैः अध्वरसम्भवैः (यज्ञोद्भवैः) धूमैः अम्बरं (गगनं) श्यामीकृतं यैः दानैः प्रतिदिनं (नित्यं) द्विजाः (ब्राह्मणाः) तोषिताः यैः शिक्षासंस्कृतया गिरा प्रतिदिनं पण्डिताः (विद्वांसः) तोषिताः (तर्पिताः) तत्तस्मात्कारणात् अधुना भक्त्या तैर्विनिमंत्रिताः एतादृशाः वयं धरण्यां (भूम्यां) धन्याः (प्रशंसनीयाः) ॥११॥

भाषा—हे सम्बन्धिन्! जिन्होंने यशसे तीनों लोकको उज्ज्वल कर दिया और जिन्होंने यज्ञके धूएँसे गगनको नीलवर्ण बना दिया, फिर जिन्होंने रोज़ रोज़ दान देकर ब्राह्मणोंको तृप्त कर दिया एवं जिन्होंने शिक्षारूपी संस्कृत वाणीसे पण्डितोंको सन्तुष्ट किया, उसी सज्जनता के कारण इस अवसर में भक्तिसहित उनके द्वारा निमंत्रित ऐसे हम लोग पृथ्वीपर धन्य हैं ॥११॥

कन्यापक्षे पद्यम्।

नोऽस्माकं घृतपक्वमेव न कुलं नो दीर्घता नम्रता
नो विद्या नच द्रव्यमेव न गुणं नो पुण्यदास्वास्तिदा

श्रीमत्पादजलेन पूर्वदिवसे धर्म्मांकुरः प्राप्यते
सोऽयं वै पुनरागमेन भवतां शाकत्वमापद्यताम्

टीका—हे सम्बन्धिन्, अस्माकं गृहे (भवने) घृतपक्कं (घृतेन पक्कंपाकन्नं)नास्ति एवकुलं न, एव दीर्घता न,एव नम्रता न, विद्यापि न, च (पुनः) द्रव्यं (धनं) नास्ति, एवं गुणं न, पुण्यदा स्वस्तिदा न, श्रीमत्पादजलेन (चरणोदकेन) पूर्वदिवसे (प्रथमदिने) धर्म्मांकुरः प्राप्यते सः अयं धर्म्मांकुरः वै (इति निश्चयेन) भवतां पुनरागमेन शाकत्वं आपद्यताम् (प्राप्यताम्) इत्याशयः ॥१२॥

भाषा—हे सम्बन्धिन्! हम लोगोंके स्थानमें न पक्कान्न है वैसे ही न कुल है, न बड़ाई है न नम्रता (विनय) है तथा विद्या भी नहीं है न द्रव्य है, न गुण है, न पुण्य और कल्याणदायिनी कोई चीज़ है, प्रथम दिन श्रीमान् (आप) के पाद प्रक्षालनके जलसे जो धर्म का अंकुर प्रकट हुआ सो यह निश्चय ही आपके पुनरागमन (फिर आने) से शाकत्वको प्राप्त हो, भावार्थ यह कि उसमें नवीन पत्र उत्पन्न हों॥१२॥

वरपक्षे पद्यम्।

सद्विद्या विनयेन सूनृतगिरा स्वावासदानेन च
स्वाद्वम्भोभिरनन्तभोग्यरचनासंभारसङ्कल्पनैः।
आतिथ्यं गृहकारि पूर्वदिवसे तेनैव तुष्टा वयं
भक्तिंचाद्यतनींविलोक्यभवतांस्तोतुंवसामोवयम्

टीका—हे सम्बन्धिन्। सद्विद्याविनयेन सूनृतगिरा (प्रियवाण्या) स्वावासदानेन च, पुनः स्वाद्वम्भोभिः (स्वादुनिर्जलैः) अनन्तभोग्यरचनासम्भारसंकल्पनैः ( न अन्तो यस्य तत् अनन्तं अनन्तं च तद्भोग्यं तस्य रचना तस्याः। सम्भारा तेषां संकल्पनं तैः) पूर्वदिवसे आतिथ्यं ( अतिथेर्भावः ) यत् अकारि, तेन एव वयं तुष्टाः च, पुनः भवतां अद्यतनीभक्तिं विलोक्य ( दृष्ट्वा ) स्तोतुं वयं वसामः ॥ १३ ॥

भाषा—हे सम्बन्धिन् ! सुन्दर विद्या और नम्रतासे, प्रिय वाणीसे, स्वःकीय जनवास देनेसे, स्वादिष्ट जल और विविध भाँतिके भोगकी सामग्रीके संचय संकल्पकी रचना तिससे प्रथम दिन हमारा जो सत्कार (मेहमानी) की उससे हम तृप्त हुए परन्तु आपकी भक्ति देखकर आपकी स्तुति करनेको हम सब लोग बसते (ठहरते) हैं ॥ १३ ॥

कन्यापक्षे पद्यम् ।

अहिपतिरहिलोके शारदा सापि दूरे
वसति विबुधवन्द्यः शक्रगेहे सदैव ।
निवसति शिवपुर्यां षण्मुखोऽसौ कुमार-
स्तव गुणमहिमानं को वदेदत्र देव ॥१४॥

टीका—दीव्यतीति देवः तत्सम्बुद्धौ हे देव ! अहिपतिः (अहीनाम्पतिः) नागराजः अहिलोके (पाताले) वसति, अपि (निश्चयेन) शारदा (सरस्वती) दूरे वसति, विबुधवन्द्यः (विबुधैः सुरैर्वन्द्यः वन्दनीयः गुरुः ) सदैव शक्र (इन्द्र) गेहे वसति

(वासं करोति) असौ कुमारः षण्मुखः (कार्तिकेयाः) शिवपुर्यां निवसति अतोऽत्र (इहलोके) तव गुणमहिमानं कः वदेत् (नकोपीत्याशयः) ॥ १४ ॥

भाषा—हे देव ! शेषजी पातालमें रहते हैं निश्चय करके सरस्वती भी दूर रहती हैं एवं विबुधवन्द्य बृहस्पतिजी सदा इन्द्रपुरीमें निवास करते हैं तथा षडानन कैलासमें निवास करते हैं इस कारण इस मर्त्यलोकमें आपके गुणोंकी महिमाको कौन कहे। भावार्थ यह कि यहाँ कोई नहीं कह सकता ॥ १४॥

वरपक्षे पद्यम्।

प्रत्येकं मुखकोटयः प्रतिमुखं जिह्वा सहस्रंभवे-
ज्जिह्वाग्रेषु सहस्रधा यदि वसेद्देवीस्वयं शारदा।
लोकश्चेत्सकलो विरंचिसदृशः स्तोतुं तदा शक्यते
युष्माकं कुलकीर्तिकान्तिकविता पाण्डित्य
शीलादिकम् ॥१५॥

टीका—हे सम्बन्धिन् ! प्रत्येकं मुखकोटयः (एकं एकं प्रति इति प्रत्येकं मुखानां कोटयः मुखकोटयः) यदि भवेयुः प्रतिमुखं जिह्वासहस्रं (जिह्वानां सहस्रं) भवेत् जिह्वाग्रेषु यदि शारदादेवी स्वयं सहस्रधा वसेत् चेत्, सकलः लोकः विरंचिसदृशः यदा भवेत् तदा युष्माकं कुलकीर्तिकान्तिकविता पाण्डित्यशीलादिकं स्तोतुं शक्यते (अन्यथा न) ॥ १५ ॥

भाषा—हे सम्बन्धीजी, यदि एक एक मनुष्यके करोड़ करोड़ मुख हों और एक एक मुखमें हजार हजार जिह्वा हों और जिह्वा के अग्रभाग में यदि

सरस्वती देवी स्वयं सहस्र प्रकारसे निवास करें और सब लोक यदि ब्रह्मा के समान हों तब भी आपकी कुल कीर्ति, कान्ति, कविता, पण्डिताई, शीलता आदिकी स्तुति करनेको समर्थ हों ( ऐसा न होनेपर आपकी कुलकीर्ति, कान्ति कविता इत्यादि कदापि नहीं कही जा सकती) ॥ १५ ॥

कन्यापक्षे पद्यम्।

सत्यासक्तमनाः प्रवृद्धनरकच्छेदी द्विजेन्द्राश्रयो
यश्चानेकमुखोद्भवास्पदमलं श्रीर्यत्र संराजते ।
योगङ्गां च बिभर्ति यश्च सशिवो यः कामदेहाश्रयः
सङ्गः साम्यमयं प्रयाति भवतां कृष्णेन रुद्रेण वा १६

टीका। हे सम्बन्धिन् ! भवतां अयं संगः (संगमः) कृष्णेन वा रुद्रेण ( शिवेन ) साम्यं ( समस्य भावः साम्यं, समानतां) प्रयाति ( गच्छति ) कीदृशः संगः सत्यासक्तमनाः सत्ये सत्यकथने आसक्तं तत्परं मनश्चित्तंयस्य सः कृष्णपक्षेतु सत्यासक्तमनाः सत्...र्थः सत्यभामा तस्या आसक्तं मनो यस्य सः । रुद्रपक्षेतु सत्यासक्तमना- सतीकोर्थः पार्वती तस्यां आसक्तं (संलग्नं) मनोयस्य तादृशः ॥ १ ॥ पुनः कीदृशः संगः प्रवृद्धनरकच्छेदी, प्रवृद्धानां मृतानां नरकं। ( नरान् कायतीति नरकः कोर्थः मृतानां नरकनाशकः नाम्निचेतिशास्त्रेण कैर्शीलोर्ड्प्रत्ययः) छिनत्तीति। किम्वा प्रवृद्धानां वृद्धिवतां नरकाणां कुत्सित जनानां नाशकर्ता। कृष्णपक्षेतु प्रवृद्धनरकच्छेदी, प्रवृद्धं प्रचण्डं नरकासुरं छिनत्ति यः सः रुद्रपक्षेतु प्रवृद्धं नरकं निरयं छिनत्ति

यः सः ॥ २ ॥ पुनः कीदृशः संगः द्विजेन्द्राश्रयः ( द्वाभ्यांजन्म-संस्काराभ्यां ।जायते द्विजः ब्राह्मणः द्विजानां इन्द्रः द्विजेन्द्रः द्विजेन्द्राणां श्रेष्ठ ब्राह्मणानां आश्रयः) कृष्णपक्षेतु द्विजेन्द्राश्रयः द्वाभ्यां अराडपिराडाभ्यां जायते द्विजः द्विजानां इन्द्रः स्वामी द्विजेन्द्रः पक्षिराजो गरुडः आश्रयः आधारोयस्य सः, रुद्रपक्षेतु द्विजेन्द्राश्रयः द्विजेन्द्रः * चन्द्रः तस्य आश्रय आधारः ॥३॥ पुनः किम्विशिष्टः संग यश्च अनेकमुखोद्भवास्पदं । न एकं अनेकं अनेकानि मुखानि वदनानि यस्य सः अनेकमुखः अनेकमुखात् उद्भवः उत्पत्तिर्यस्य स अनेकमुखोद्भवः अने[illegible]याः वाण्याः आस्पदं (आस्पदं प्रतिष्ठायां निपात्यते प्र[illegible]ष्ठास्थानं कोर्थः † भारतीनिवासस्थानमित्याशयः) कृष्णपक्षे[illegible] यश्च अनेक-मुखोद्भवास्पदं, अनेकमुखस्य कोर्थः ब्राह्मणः [illegible]त्तिस्थानं यः सः, रुद्रपक्षेतु यश्च अनेकमुखोद्भवास्पदं, अनेकमुखस्य कार्त्तिकेयस्य उत्पत्तिस्थानं यः सः ॥ ४ ॥ पुनः [illegible] संगः श्रीर्यत्र संराजते, यत्रश्रीः कोर्थः ।वाणी अलं [illegible] संराजते प्रकाशते, कृष्णपक्षेतु श्रीर्यत्र संराजते यत्रश्रीः लक्ष्मीरलं संरा-जते, रुद्रपक्षेतु श्रीर्यत्र संराजते यत्रश्री ऐश्वर्यमलं संराजते ॥५॥ पुनः कीदृशः संगः योगङ्गाञ्चबिभर्ति योगं योगक्रिया च पुनः गां वाणीं धेनुम्वा विभर्ति धाति रक्षति वा, कृष्णपक्षेतु योगङ्गाञ्चबिभर्ति, ‡यः अंगं । नगोविभापाऽप्राणिषु नगच्छतीति

* सोमोऽस्माकं ब्राह्मणानांराजा, इति श्रुतेः ।

† भाषी तु भारती भाषा गीर्वाग्वाणी सरस्वती, इत्यमरः ।

नगः कोर्थः अगः तं, गोवर्धनाख्यं पर्वतं गां भूमिं धेनुर्वा विभर्ति दधाति पाति वा, रुद्रपक्षेतु योगंगाञ्च विभर्ति, स पुनः यः भक्तां भागीरथीं दधाति ॥६॥ पुनः कीदृशः संगः यश्च स शिवः, एवं पुनः यः संगः सशिवः* शिवेन कल्याणेन सहितः, कृष्णपक्षेतु यः च सशिवः शंकरेण उमापतिना सहितः यत्राग-मस्य इत्याशयः, रुद्रपक्षेतु यः स सशिवः यः सशिवः शिवया पार्वत्या सहितः ॥७॥ पुनः कीदृशः संगः यः कामदेहाश्रयः कामयदेहस्य आश्रयः अथवा कामं ददाति सा कामदा तादृश्या ईहाया कोर्थः चेष्टायां† आश्रयः कृष्णपक्षेतु यः कामदेहाश्रयः कामदेहस्य प्रद्युम्न शरीरस्य आश्रयः, रुद्रपक्षेतु यः कामदेहा-श्रयः कामदेवं मदनं द्यति खण्डयति ( दोऽवखण्डने इत्य-स्माद्धातोः पचाद्यच् ) साकामदा तादृश्या ईहाया चेष्टाया आश्रयः इति शेषः ॥ ८ ॥

भाषा—हे सम्बन्धी जी! यह पका यह संग (मिलाप, संयोग, समागम) कृष्णजी और शिवजीके समान है। आपका वह मन कैसा है कि सत्यामें आसक्त (लगा) है मन जिसका ऐसा। कैसे हैं श्रीकृष्णजी कि सत्या जो सत्यभामा तिसमें लगा है मन जिनका ऐसे। फिर कैसे हैं रुद्र (शिवजी) कि सती जो पार्वती जिनमें लगा है मन जिनका ऐसे ॥ १ ॥ फिर कैसा है संग कि दुष्टों (पुरुषार्थों) को नरकसे बचानेवाला अथवा दुराचारी और दुष्ट पुरुषोंका नाशक, कैसे हैं श्रीकृष्णजी कि अति प्रबल जो नरकासुर तिनके वध करनेवाले, कैसे हैं रुद्र कि अति दुर्गम जो नरक रौरवादि तिनसे रक्षा

---

* श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभमित्यमरः।

† करचरणानुकूल व्यापारः चेष्टाः।

करनेवाले ॥२॥ फिर कैसा है संग कि सज्जनोंका आश्रय (सहारा) है, कैसे हैं कृष्णजी कि पक्षिराज जो गरुड़ वह वाहन है जिनका, कैसे हैं रुद्र (शिव) कि चन्द्रमा धारण किये हैं ऐसे ॥३॥ फिर कैसा है आप लोगोंका संग कि विविध मुखसे की जाती है प्रतिष्ठा जिसकी, कैसे हैं श्रीकृष्णजी कि अनेक मुख ब्रह्माकी है उत्पत्ति जिनसे, कैसे हैं शिव कि षड़ानन (कार्तिकेय) की है उत्पत्ति जिनसे ॥४॥ फिर कैसा है संग कि जहाँ वाणी अति चतुरता से बोली जाती है, कैसे हैं श्रीकृष्णजी कि जहाँ लक्ष्मीजी शोभित हैं, कैसे हैं शिवजी कि पूर्ण ऐश्वर्य जहाँ दीप्तिमान हो रहा है ।५॥ फिर कैसा है आप लोगोंका यह संग कि योगक्रियामें प्रवीण है, एवं मृदुल वाणी धारण किये हैं अथवा गौकी रक्षा करता है, कैसे हैं श्रीकृष्णजी कि गोवर्धन गिरि तथा गौका पालन करते हैं, कैसे हैं शिवजी कि सिर पर गंगा धरे हैं ॥ ६ ॥ फिर कैसा है संग कि मंगलमय है, कैसे हैं श्रीकृष्णजी की जो सर्वेश महादेव सहित ध्यान से जानने योग्य हैं, कैसे हैं शिवजी कि पार्वती संयुक्त हैं ऐसे ॥ ७ ॥ फिर कैसा आप लोगोंका यह संग है कि कामदेव तुल्य शरीरवाला, या जो वाञ्छा पूर्ण करने की इंहा (चेष्टा) रखे इस विष, कैसे हैं कृष्णजी कामदेव अर्थात् प्रद्युम्न के आश्रय (अवलम्ब) हैं, कैसे हैं शिवजी कि जो कामके विनाश की चेष्टा रखते हैं, ऐसे श्रीकृष्ण और शिवकी बराबरी (समान है), कान्तिवाला यह आप लोगों का संग है (अतः अनेक प्रकार हम आपको धन्यवाद देते हैं) ॥ १६ ॥

वरपक्षे पद्यम् ।

गोसंरक्षाकृतिविधानविलसद्वाचोन्नतिः कामदो
योगाक्रान्तकलेवरोऽत्रितनुजो विस्तीर्णकीर्तिप्रद
शम्भ्वाराधनतत्परोऽमलगुणग्रामाभिरामास्पदः
सङ्गः साम्यमयं प्रयाति भवता कृष्णेन रुद्रेण वा॥१९

टीका—हे सम्बन्धिन्! भवतां अयं संगः ( संयोगः, समागमः ) कृष्णेन वा रुद्रेण ( शिवेन ) साम्यं ( तुल्यतां ) प्रयाति (गच्छति), कीदृशः संगः गोसत्कार कृतिः वाणीसत्कार प्रयत्नवान्, कृष्णः कीदृशः गोसत्कारकृतिः गवां धेनूनां सत्कारः सन्मानं गोसत्कारः तस्मिन् कृतिः प्रयत्नः उपायो यस्य सः, रुद्रः कीदृशः गोसत्कारकृतिः, गोर्वृषभस्य स्ववाहनस्य सत्कारे सन्माने कृतिः प्रयत्नो यस्य सः, पुनः कीदृशः संगः विरागविलसच्चित्तोन्नतिः, विविधा अनेका रागाः विरागाः तेषु विरागेषु विलसन्ती चित्तोन्नतिः मनोवृत्तिर्यस्य सः विरागविलसच्चित्तोन्नतिः, कृष्णः कीदृशः विरागविलसच्चित्तोन्नतिः वातीति विः पक्षी, वौ पक्षिणि गरुडाख्ये रागः प्रेम इति विरागः तेन विरागेन गरुडप्रेम्णा विलसंतीचित्तोन्नतिर्यस्य सः, रुद्रः कीदृशः, विरागविलसच्चित्तोन्नतिः, विरागेत्यागे विलसंती चित्तोन्नतिर्यस्य सः ॥२॥ पुनः कीदृशः संगः कामदः कामान् मनोरथान् ददातीति कामदः, कृष्णः अप्येवं, रुद्रः कीदृशः कामदः, कामं कामदेवं द्यति खंडयतीति कामदः कामदाहक इत्याशयः ॥ ३ ॥ पुन कीदृशः संगः योगाक्रान्तकलेवरः, योगेन कोर्थः योगशास्त्रेण आक्रान्तं व्याप्तं कलेवरं अङ्गं यस्य सः योगाक्रान्तकलेवरः कृष्णः कीदृशः यः अगेनकोर्थः गोवर्धन पर्वतेन आक्रान्तं कलेवरं यस्य सः; रुद्रः कीदृशः योगेन आक्रांत कलेवरं यस्यसः ॥ ४ ॥ पुनः कीदृशः संगः नत्रितनुजः अत्रितनुजः इति अत्रितनुजः, कृष्णः कीदृशः अत्रितनुजः अत्रेः कोर्थः अत्रिऋषेः तनुजः

दत्तात्रेयस्य कृष्णावतारत्वात् 'कृष्णस्यात्रितनुजत्वम्, रुद्रः कीदृशः अत्रितनुजः अत्रेः कोर्थः अत्रिऋषेः तनुजः पुत्रो दुर्वासा-नामक इत्याशयः ॥ ५ ॥ पुनः कीदृशः संगः विस्तीर्णकीर्तिप्रदः, विस्तीर्णाचासौ कीर्तिः विस्तीर्णकीर्तिः विस्तीर्णकीर्तिं प्रददाति विस्तीर्णकीर्तिदायक इत्याशयः, कृष्णपक्षे रुद्रपक्षेचेत्थम् ॥ ६ ॥ पुनः कीदृशः संगः रामाराधनतत्परः, रामाणां स्त्रीणांमाराधने सन्माने तत्परः आसक्तः एतादृशः भवान्, कृष्णः कीदृशः रामाराधनतत्परः, रामाणां गोपिकानामाराधने तत्परः रुद्रः कीदृशः रामाराधनतत्परः, रामस्य रामचन्द्रस्य आराधने स्मरणे तत्परः आसक्तः ॥ ७ ॥ पुनः कीदृशः भवतामयं संगः, अमलगुणगणग्रामाभिरामास्पदः, अमलाश्च निर्मलाश्चयेगुणा, अमलगुणाः अमलगुणानां ग्रामः समूहः अमलगुणग्रामः तस्य अमलगुणग्रामस्य अभिरामं सुन्दरमास्पदं प्रतिष्ठानं यस्मिन् सः अमलगुणग्रामाभिरामास्पदः, कृष्णपक्षे रुद्रपक्षे चेत्थं-ज्ञेयम् ॥ ८ ॥ १७ ॥

भाषा—हे सम्बंधीजी ! आप ऐसे सज्जनों का यह संग ( मिलाप ) कृष्णजी अथवा शिवजी के तुल्य है, कैसा है आपका संग कि गो जो वाणी है तिससे किया जाता है सन्मान जिसमें, श्रीकृष्णजी कैसे हैं कि गौवों के सत्कार करने का प्रबन्ध (उपाय) है जिनका, शिवजी कैसे हैं कि नंदीश्वर के सन्मानकर्त्ता ॥ १ ॥ फिर कैसा है आपका संग कि अनेक भाँति के प्रेमों में आनंद करनेवाली चित्त की वृत्ति जिसमें, कैसे हैं श्रीकृष्णजी कि गरुड़जी के स्नेह में आनन्द करनेवाली है चित्त की वृत्ति जिनकी, शिवजी कैसे हैं कि वैराग्य में आनन्द करनेवाली है चित्तवृत्ति जिनकी ॥ २ ॥ फिर

कैसा है आपका यह संग कि मनोरथ पूर्ण करनेवाला, कृष्णपक्ष में इच्छित (वांछित) पदार्थदायक हैं, महादेवजी कैसे हैं कामको जलानेवाले ॥ ३ ॥ फिर कैसा है संग कि योगशास्त्र में व्याप्त है अंग जिसका, कृष्णजी कैसे हैं कि गोवर्धन पर्वत करके व्याप्त हुआ है कलेवर जिनका, महादेवजी कैसे हैं कि योग जो हठयोग उसमें व्याप्त है शरीर जिनका ॥ ४ ॥ फिर कैसा है आपका संग कि तीन देहों से नहीं प्रकट होनेवाला, कृष्णजी कैसे हैं कि अत्रि ऋषि के तन से उत्पन्न होनेवाले, दत्तात्रेयजी भगवान् कृष्ण ही के अवतार हैं, महादेवजी कैसे हैं कि अत्रि के तन से प्रकट दुर्वासा ऋषि, अत्रिजी के पुत्र महादेवजी का अवतार कहलाते हैं ॥ ५ ॥ फिर कैसा है आप लोगों का यह संग कि सम्पूर्ण देश में व्याप्त होनेवाले यश का दाता है, कृष्णपक्ष में और रुद्रपक्ष में भी ऐसा ही अर्थ समझना चाहिये ॥ ६ ॥ फिर कैसा है आपका यह संग कि स्त्रियों के सन्मान संलग्न, श्रीकृष्णजी कैसे हैं कि गोपिकाओं के आराधन में तत्पर, शिवजी कैसे हैं कि रामचन्द्र के आराधन (स्मरण) में लगे हुए ॥ ७ ॥ फिर कैसा है आप लोगों का यह संग कि अति निर्मलगुणगण का सुन्दर प्रतिष्ठास्थान है, कृष्णपक्ष और रुद्रपक्ष में भी ऐसा ही अर्थ समझना चाहिये ॥८॥१७॥

## विवाहस्य तृतीयदिने निशि वाच्यम् ।

विवाह के तीसरे दिन (छोटी बकहार) रात में कहना चाहिये।

### कन्यापक्षे पद्यम् ।

इन्द्रस्याम्बुसमर्पणं किमुचितं यस्याङ्गणे स्वर्णदी
वासोऽलङ्करणैर्भवेदुपचितं किं यस्य कल्पद्रुमः ।
अन्नाद्यैरपि तुष्टिरस्य किमहो यस्यास्ति गेहे सुधा
तस्मात्तत्र नतेःपरं किमुचितं बद्ध्वाञ्जलिं चाग्रतः

टीका—हे सम्बन्धिन् इन्द्रस्य अङ्गणे ( अजिरे ) स्वर्णदी कोर्थः गंगा अस्ति, तस्य इन्द्रस्य अम्बु ( जलं ) समर्पणं (दानं) किं उचितं (अनुचितानेत्याशयः ) तथा यस्य इन्द्रस्यगृहे कल्पद्रुमः अस्ति तस्य वासोऽलंकरणैः ( वस्त्रभूषणैः ) किं उपचितं (समृद्धं) भवेत् अहो ( आश्चर्यं न किमपि ) यस्य इन्द्रस्य गेहे सुधा (अमृतं) अस्ति, तस्य इन्द्रस्य अन्नाद्यैः। अपि किं तुष्टिः (तृप्तिः) भवति तस्माद्धेतोः अत्र तस्मिन् अग्रतः (पुरतः) अंजलिम्बद्ध्वा न तेः परं किं उचितम्। (तथैव भवतां स्तुतिं विना किं योग्यं न किञ्चित्) ॥१८॥

भाषा—हे सम्बन्धिजी ! जिस इन्द्र के आँगन में स्वर्णदी (गंगा) बहती है तिसको जलदान क्या उचित है अर्थात् अनुचित है; तथा जिस इन्द्र के भवन में कल्पवृक्ष है तिसको वस्त्रभूषण देने से क्या वृद्धि (बढ़ती) होती है अर्थात् नहीं, यह विस्मय की बात है कि जिस इन्द्र के यहां सुधा (अमृत) तिस इन्द्र की क्या अन्नादि से तृप्ति होती है अर्थात् नहीं, इसलिये तहां इन्द्र के सामने कर जोड़ नम्रतापूर्वक नमस्कार के सिवाय और अधिक क्या उचित है (तैसे ही आप लोगों की स्तुति के सिवाय हम क्या कर सकते हैं अर्थात् कुछ भी नहीं ) ॥१८॥

वरपक्षे पद्यम्।

सामग्रीं सरसां सुधाऽतिमधुरां नानाविधां निर्मलां
सर्वव्यंजनसंयुतांसुमहतीं कर्पूरपूरोज्वलाम्।
सम्वीक्ष्येतिवितर्कमेति हृदयं किं कामधेनुर्गृहे
किम्वाकल्पतरुर्विभाति किमहो सिद्धिश्चतेमानसीः

टीका—हे सम्बन्धिन् ! सरलां सुधातिमधुरां नानाविधां निर्मलां सर्वव्यञ्जनसंयुतां कर्पूरपूरोज्ज्वलां सुमहतीं सामग्रीं संवीक्ष्य ( अवलोक्य ) हृदयं इति वितर्कं पति ( प्राप्नोति ) किं तवगृहे कामधेनुः अथवा कल्पतरुः (कल्पवृक्षः) विभाति अहो (आश्चर्ये) किं ते मानसी सिद्धिरस्तीतितु वयं न जानीमहे ॥१६॥

भाषा—हे सम्बन्धिन् ! रसीली अमृत समान निर्मल नाना प्रकारकी सामग्री कर्पूर के समान उज्वल देखकर हमारा हृदय वितर्क को प्राप्त है कि क्या आपके घरमें कल्पवृक्ष है अथवा कामधेनु है अथवा आपको मानसी सिद्धि है यह हम नहीं जान सकते ॥ १६ ॥

अथवा

पूरी पूर्णशशिप्रभा बहुतरा खण्डा च पीयूषव-
च्छुभ्रं कुण्डलिकादिगन्धमधुरद्रव्यैरलंभावितम्।
सद्योत्थं दधि श्रद्धयान्यदपि वा सन्धानितं यत्फलं
भुक्तं तत्परितोषिताः सुरसमाः किं वर्णमायो वयम्

टीका—हे सम्बन्धिन् ! पूर्णशशिप्रभा पूरी (शष्कुली) च पुनः बहुतरा (अधिकतरा) खण्डा, तथा पीयूषवत् (अमृतवत्) शुभ्रं निर्मलं कुण्डलकादि (लोके जलेबी इमिरतीति प्रसिद्धं नाम) गन्धमधुरद्रव्यैरलं भावितं, तथा सद्योत्थं दधि ( तत्काक्षोद्भूतं दधि) वा (पुनः) अन्यत् अपिश्रद्धया यत्फलं (मया) सन्धानितं (लब्धं) तत् भुक्तं सुरसमाः (सुरैः समाः देवतुल्याः) परितोषिता एतादृशा वयं किं वर्णयामः ॥२०॥

भाषा—हे सम्बन्धीजी ! पूर्णमासीकी चन्द्रमा जैसी शोभावाली पूरी एवं अधिकतर खांड ( शक्कर ) तैसे ही अमृत समान विमल जलेबी इमिरती कपूर केवड़ा आदि सुगन्धयुक्त मधुर ऐसी चीजोंसे बनाई हुई एवं (और) ताज़ी दही और भी आपकी श्रद्धाके अनुसार जो पदार्थ फल हमको प्राप्त हुआ तिसको भोजन कर देवताओंके तुल्य तृप्त हुए ऐसे हम लोग कुछ नहीं कह सकते ॥ २० ॥

अन्यच्च ।

पूरीदूरीकृतेन्दुद्युतिरतिविमला चारु गौरी कचौरी
दध्ना चन्द्रेण युक्ता विधुरिव सुशिता शर्करा कर्कराङ्गा ।
पक्वान्नैर्मोदकाद्यैर्बहुविमलरसा जल्लवल्लीमतल्ली
तर्कारी सिंधुतारी प्रदिशति न रुचिं कस्य युष्मद्वदारा ॥

टीका—हे सम्बन्धिन् ! युष्मद्वदारा कस्यरुचिं न प्रदिशति कोर्थः सर्वेषां मनुष्याणां रुचिं प्रीतिं प्रकटयतीत्याशयः, कथंभूतावदारा यस्यां भवद्भिः इन्दुद्युतिं ( चन्द्रछवि ) दूरीकृता ईदृशी पूरीदत्ता, पुनः कीदृशीवदारा यस्यां विमला ( उज्वला ) चारुगौरी कोर्थः गौरवर्णा कचौरीदत्ता; पुनः कथम्भूतावदारा यस्यांविधुरिव सुसिता कोर्थः चन्द्रवन्निर्मला शर्करादत्ता. कथंभूता शर्करा कर्करांगी, पुनः कथंभूता दध्नाच ( पुनः ) चन्द्रेण कोर्थः कर्पूरेणयुक्ता, पुनः कथम्भूतावदारा मोदकाद्यैः पक्वान्नैः सहजलवल्ली मतल्लीदत्ता, पुनः कथम्भूता जल्लवल्लीमतल्ली बहुविमलरसाः, पुनः कथंभूतावदारा यस्यां तर्कारी सिंधुतारी कोर्थः सैंधवलवणयुक्ता दत्तेत्यर्थः ॥ २१ ॥

भापा—हे सम्बन्धीजी ! आपकी बढ़ार ( जेमनवार ) किस पुरुषको रुचि नहीं देती अर्थात् सब ही मनुष्योंको रुचि ( प्रीति ) को प्रकट करती है; कैसी है बढ़ार कि जिसमें चन्द्रप्रभा दूर करने वाली पूरी आपने दी, फिर कैसी है बढ़ार कि जिसमें मन को हरने वाली उज्ज्वल कचौरी दी, फिर कैसी है बढ़ार कि जिसमें शशि समान निर्मल शक्कर दी; कैसी है शक्कर कि दरदरी है, फिर कैसी है कि दही और कपूर संयुक्त है, फिर कैसी है बढ़ार कि जिसमें मोदकादि पकवानों करके युक्त जलेबी तथा इमिरती दी हैं, कैसी हैं जलेबी अमिरती अत्यन्त रुचिकर और रसीली है फिर कैसी है बढ़ार कि जिसमें सैंधवलवण मिश्रित तरकारी दी, कहने का आशय यह है कि आपकी बढ़ारमें अनेक प्रकार के भोजन कर हम सन्तुष्ट हो गये अतः अधिक प्रशंसा करने में असमर्थ हैं ॥ २१ ॥

कन्यापक्षे पद्यम् ।

नित्यानन्दमयस्य यस्य पुरतोधर्तुं सुधाशक्यते
निर्लज्जेन मयानिवेदितमिदंशाकं न सुस्वादुयत्
श्रीनाथेन कृपामयेन विधिना भुक्तं तथाप्यादरा-
दातिथ्याय ममोद्यमं यदिपुनर्भूयो विधेयास्थिति

टीका—हे सम्बन्धिन् ! नित्यानन्दमयस्य यस्य ( तव ) पुरतः कोर्थः अग्रतः सुधा ( अमृतं ) धर्तुं शक्यते निर्लज्जेन ( लज्जारहितेन ) मया यत् इदं शाकं न सुस्वादु ( नीरसम् ) निवेदितं कोर्थः समर्पितं तत्कृपामयेन ( दयाप्रधानेन ) श्रीनाथेन आदरात् ( सत्कारात् ) विधिना भुक्तं यदि पुनः आतिथ्याय मम उद्यमं तदा भूयः ( पुनरेव ) स्थितिः विधेया ॥ २२ ॥

भाषा—हे सम्बन्धिन् ! सर्वदा आनन्दमय जो आप इनके सामने अमृत ( समान भोजन ) रखना ठीक था सो निर्लज्ज होकर मैंने जो यह असुन्दर स्वादरहित शाक आपके अर्पण किया उसे भी कृपापूर्वक भीनाथ जो आप इन्होंने आदरसे विधिसहित भोजन किया, इससे आपके आतिथ्य ( सम्मान ) के लिये हमारा फिर भी विचार है तो आपको और भी स्थिर रहना ( ठहरना ) योग्य है ॥ २२ ॥

## वरपक्षे पद्यम् ।

भुक्तं सर्वसुखावहान्नमुदकं पीतं सुशीतामलं
प्राप्तं स्थानमनुत्तमं सुखकरा शय्या च प्राप्ता शुभा
भक्तिश्चेद्भवतोऽस्ति तर्हि तरुणा येऽत्रागता उत्सवे
तेभ्यश्चन्द्रमुखीः प्रयच्छ तरुणीः कन्दर्पपीडायुजः

टीका—हे सम्बन्धिन् ! सर्वसुखावहान्नं भुक्तं पश्चात्सुशीतामलमुदकं पीतं पुनः अनुत्तमं ( न उत्तमो यस्मात् तत् ) स्थानं प्राप्तं च ( पुनः ) सुखकरा शुभा शय्या प्राप्ता. चेत् ( यदि ) भवतः भक्तिः अस्ति तर्हि ( तदा ) अत्र ( अस्मिन् ) उत्सवे ये तरुणाः युवपुरुषाः आगताः तेभ्यः कन्दर्पपीडायुजः ( कन्दर्पस्य कामदेवस्य या पीडा तया युंजन्तिः, इति ) चन्द्रमुखीः (शशिवदनाः) तरुणीः (युवतीः) प्रयच्छ देहित्वमिति शेषः ॥२३॥

भाषा—हे सम्बन्धिन ! सर्व सुखदायक जो अन्न उसे भोजन कर पश्चात् सुन्दर ठण्ढा जल पीकर हम तृप्त हुए, पुनः अत्युत्तम जनवासा रहने को मिला एवं सुखदायक बिछौना बिछी हुई शय्या मिली तिससे हम आनंदित

हुए, आप जो और आपकी भक्ति है तो इस उत्सवमें जो जवान पुरुष आये हैं उनके लिये कामदेवकी पीड़ा को हरने वाली चन्द्रमुखी सदृश स्त्रियाँ अर्पण कीजिये यही प्रार्थना है ॥ २१ ॥

कन्यापक्षे पद्यम्।

कीर्तिस्तेद्विजवंशभूषणविभो सक्ता सतां वै श्रुतौ
नोतृप्ताकुलटेव किं बहुतया पारंगता वारिधेः
रन्तुं तृप्तिमनागता करिवरैरासेव्यमानापरं
राकेन्द्रोर्भ्रमणे भवत्प्रियतमा नाद्यापिसन्तुष्यति

टीका—हे द्विजवंशभूषण विभो तव कीर्तिः (त्वद्यशः) श्रुतौ (कर्णे) सतां (सज्जनानां) सक्ता अपि कुलटा (कुले कुले अटति गच्छतीति सा वेश्या) इव नो तृप्ता (न सन्तुष्टा) किं बहुतया वारिधेः (समुद्रस्य) पारंगता सती रन्तुं (क्रीडितुं) करिवरैः (दिग्गजैः) आसेव्यमानापि तृप्तिमनागता सा भवत्प्रियतमा राकेन्दोः (पूर्णचन्द्रस्य) भ्रमणे अद्यापि न सन्तुष्यति ॥२४॥

भाषा—हे विप्रवंशभूषण विभो! तुम्हारी कीर्तिरूपी भार्य्या सज्जनोंके कानोंमें लग कर कुलटा (वेश्या) तुल्य सन्तुष्ट न हुई, अधिक कहाँ तक कहैं कि समुद्रके पार जा रमण करनेके लिये ऐरावतादि हाथियोंसे भोगी भी गई तथापि तृप्त न हुई, ऐसी आपकी प्यारी कीर्ति रूपी पत्नी पूर्णचन्द्रके भ्रमणमें आजतक भी तृप्त नहीं होती इस प्रकार भूखी है ॥ २४ ॥

वरपक्षे पद्यम्।

गाम्भीर्यं जलधौ महोन्नतिगुणोमेरौशशांकेकला
तेजश्चण्डरुचौ हरौविजयता कल्पद्रुमेत्यागिता।
चातुर्य्यं चतुरानने शशिधरे शीघ्रप्रसादोगुण
स्ते सर्वे पृथगेवसन्तिमिलिता त्वय्येव सर्वेगुणाः॥

टीका—हे सम्बन्धिन् ! जलधौ कोर्थः समुद्रे गाम्भीर्यं कोर्थः गम्भीरता अस्ति, मेरौ (सुमेरु पर्वत) महोन्नति गुणः अस्ति, शशांके कोर्थः चन्द्रे कलाः संति चंडरुचौ (सूर्य्ये) तेजः अस्ति, हरौ कोर्थः विष्णौ विजयिता अस्ति, कल्पद्रुमे त्यागिता कोर्थः उदारत्वमस्ति, चतुरानने (विरिंचौ) चातुर्य्यं अस्ति, शशिधरे ( महादेवे ) शीघ्रप्रसादो गुणः अस्ति, ते सर्वेगुणाः पृथक् पृथक् वसन्ति, परन्तु त्वयि सर्वेगुणाः मिलिताएव वर्तन्ते ॥ २५ ॥

भाषा—हे सम्बन्धीजी ! समुद्रमें गम्भीरताका गुण है, सुमेरु पर्वतमें महा उन्नतिका गुण है, चन्द्रमामें कला है, सूर्यमें तेज (प्रकाश) का गुण है, विष्णुमें विजयिता जीतनेका गुण है, कल्पवृक्षमें दानशीलताका गुण है, ब्रह्मामें चातुर्य्यं (चतुरता) का गुण है, महादेवजीमें शीघ्र प्रसन्न होनेका गुण है। ये सम्पूर्ण गुण अलग ही अलग हैं परन्तु आपमें यह समस्त गुण वर्तमान हैं ( अतः आप सर्वगुणनिधान महान् विद्वान् परमैश्वर्य्यवान् हैं आपकी प्रशंसा कदापि नहीं हो सकती) ॥ २५ ॥

अन्यापत्ये पद्यम् ।

काष्ठं कल्पतरुस्सुमेरुरचलश्चिन्तामणिः प्रस्तरो
नूनंकामदुघा चतुष्पदयुतासन्तापकारीरविः ।
सिन्धुःक्षारमयःशशीच विकलः कामोप्यनङ्ग-
स्तथा चित्तं चिन्तयते सदा गुणनिधे
कस्योपमा दीयते ॥२६॥

टीका—हे गुणनिधे ! अस्माकं चित्ते (मनः) चिन्तयते (ध्यायति) भवतः कस्योपमा दीयते, कल्पतरोः उपमा दीयते, यदि तर्हि कल्पवृक्षः काष्ठं अस्ति, सुमेरुः अचलः अस्ति, चिन्तामणिः प्रस्तरः (पाषाणः) अस्ति अस्ति नूनं (निश्चयेन) कामदुघा (कामधेनुः) चतुष्पदयुता अस्ति, रविः सन्तापकारी अस्ति, सिन्धुः (सागरः) क्षारमयः अस्ति, शशी (चन्द्रः) विकलः अस्ति, कामः अपि अनंगः (देहरहितः) अस्ति । अतः केन सहोपमेयो भवान् न केनापीत्याशयः ॥२६॥

भाषा—हे सम्बन्धीजी, हम लोगोंका चित निरन्तर चिन्ता किया करता है कि आपकी उपमा (समानता, सादृश्य) किसके साथ दी जाय। यदि कल्पवृक्षकी और आपकी समानता करावें तो वह काष्ठ है और आप मृदुल स्वभाव हैं, यह भी ठीक न हुआ। यदि सुमेरु पर्वतकी उपमा दें तो वह अचल है और आप चलते फिरते हैं, यह भी व्यर्थ होगा। जो चिन्तामणिकी उपमा दें तो वह पत्थर जड़ है और आप चैतन्य हैं यह भी कहना न बना। जो कामधेनुकी उपमा दें तो वह ज्ञानशून्य पशु है और आप

मनुष्य हैं यह भी कथन व्यर्थ हुआ । जो सूर्यकी उपमा दें तो वह तपते हैं और आप शीतल अर्थात् शान्त स्वरूप हैं, यह भी अनमेल हुआ । जो समुद्रकी उपमा दें तो वह खारा है और आप मीठे हैं, यह भी वाक्य चरितार्थ न हुआ, जो चन्द्रमाकी उपमा दी जाय तो वह कलाहीन है और आप सकल कलाकुशल हैं, यह भी उचित न हुआ । जो कामदेवकी उपमा दें तो वह अंगहीन है और आप देहधारी हैं इससे किसीके साथ उपमा देने योग्य आप हैं ? अर्थात् न किसीके भी ॥ २६ ॥

परपक्षे पद्यम् ।

अपटः कपटी हिमहीनरुचिः
प्रथितः पशुरन्यकलत्ररतः ।
द्विजराजभवत्सदृशो नहरो
नहरिर्नहरिर्नहरिर्न हरः ॥२७॥

टीका—हे द्विजराज भवत्सदृशः (तुल्यः) हरः (रुद्रः) न यतः अपटः (वस्त्रहीनः) एवं हरिः (विष्णुः) भवत्सदृशः (त्वत्तुल्यः) न यतः कपटी (कपटेन छलेन युक्तः) तथा हरिः (चन्द्रः) अपि भवत्सदृशः न यतः हिमहीनरुचिः (हिमेन तुषारेण हीना रुचिः दीप्तिर्यस्यसः) पुनरपि हरिः (सिंहः) भवत्सदृशः न यतः सः पशुः प्रतिथः (प्रसिद्धः) तथैव हरिः (इन्द्रः अपि) भवत्सदृशः न यतः सः अन्यकलत्ररतः अस्ति, इत्याशयः ॥ २७ ॥

भाषा—हे द्विजराज ! आपके समान शिव भी नहीं हैं क्योंकि महादेवजी

वस्त्रहीन ( नग्न ) हैं और आप वस्त्रधारी हैं, तैसेही विष्णु भी आपके तुल्य नहीं हैं क्योंकि वह कपटी हैं और आप निश्छल हैं, इसी प्रकार चन्द्रमा भी आपके सदृश नहीं हैं क्योंकि वह हिमसे शोभारहित है और आप स्वयं शोभायमान हैं, पुनः सिंह भी आपके बराबर नहीं है क्योंकि वह पशु है और आप मनुष्य हैं तथा इन्द्र भी आपके सदृश नहीं है क्योंकि वह दूसरी स्त्रियोंका प्रेमी है और आप स्वपत्नी स्नेहानुरक्त हैं, इसलिये आपके बराबर और कोई नहीं है आप सर्वथा सर्वोपरि सराहनीय हैं ॥ १७ ॥

## कन्यापक्षे पद्यम् ।

धन्यो मेरुगिरिर्यदेकशिखरे ब्रह्मेन्द्ररुद्रादयः
स्वच्छन्दंनिवसंति सक्षितितलेक्वास्तीति न ज्ञायते
तां धत्ते भुजगाधिपः स च करे शम्भोरभूत्कङ्कणं
देवोऽसौवसति त्वदीयहृदये त्वत्तो महान्नाऽपरः२८

टीका—हे सम्बंधिन् ? प्रथमतस्तु मेरुगिरिः (सुमेरुपर्वतः) धन्योस्ति ( प्रशंसनीयोस्ति ) यस्य मेरोः एकस्मिन् एव शिखरे ब्रह्मेन्द्ररुद्रादयः सुराः स्वच्छन्दं ( स्वाधीनं ) निवसंति, स पर्वतः क्षितितले ( भूमंडले ) क्व ( कुत्र ) अस्ति, इति न ज्ञायते, तां पृथ्वीं भुजगाधिपः ( भुजेन कौटिल्येन गच्छंति ये ते भुजगाः सर्पाः तेषां अधिपः पतिः, इति ) शेषः धत्ते स च शेषः शम्भोः ( हरस्य ) करे ( हस्ते ) कंकणं ( वलयं ) अभूत् असौ देवः ( शंकरः ) त्वदीयहृदये वसति तस्माद्धेतोः अत्रास्मिन् लोके त्वत्तः महान् अपरः नेत्याशयः ॥ २८ ॥

भाषा—हे सम्बन्धिन्! पहले तो मेरु पर्वत ही धन्य (प्रशंसनीय) है कि जिस सुमेरुगिरिके एक शिखर (कंगूरा) में मघा इन्द्र रुद्र आदि समस्त देवता स्वतंत्र (सुखपूर्वक, अपने अधीन) निवास करते हैं, वह सुमेरु पर्वत इस पृथ्वीपर कहां है यह किसीको नहीं समझ पड़ता और उसी पृथ्वी को शेषजी धारे हुए हैं वह शेषजी महादेवजी के करके कंकण हो रहे हैं सो ऐसे शंकरजी आपके चित्तमें निवास करते हैं इसलिये इस लोक में आपसे बड़ा और कोई नहीं है॥ २८॥

## वरपक्षे पद्यम्।

केयंकामदुघामुनीन्विभवदाशक्रोऽमरान्पालकः
प्रत्यर्थेहिरतास्समस्तविबुधास्तद्वच्छिवोऽज्ञोऽजनः
सर्वेषां विदितार्थसाधनपरा कीर्तिर्नृपाणां तव
सम्बन्धिन्निरहेतुमर्चनमिदंत्वत्तः परोनाऽपरः२९

टीका—इयं कामदुघाः (कामधेनुः)। का, या केवलं मुनीन् विभवदा (विभवं ऐश्वर्यं ददातीति सा) शक्रः (इन्द्रः) अमरान् कोर्थः देवान् पालकः एव तद्वत् हि (इतिनिश्चयेन) समस्तविबुधाः प्रत्यर्थे (दानप्रतिदाने) तद्वत् शिवः अजः (ब्रह्मा) अजनः (विष्णुः) अपि सर्वेषां नृपाणां अर्थसाधन पराकीर्ति विदिता, किन्तु भोः सम्बन्धिन् तवइदंनिरहेतुं अर्चनं अतः त्वत्तः परः (श्रेष्ठः) अपरः (अन्यः) नेत्यन्वयः॥ २९॥

भाषा—यह कामधेनु क्या है जो केवल मुनियोंको ऐश्वर्य देती है और इन्द्र केवल देवताओंका पालन करते हैं, तैसेही निश्चयपूर्वक समस्त देवता

और ब्रह्मा विष्णु महेश की प्रकृति ( स्वभाव ) हैं जो बदला लेकर विभव देते हैं, और सम्पूर्ण राजाओं का भी यही स्वभाव है कि अपना कार्य सिद्ध करके कुछ देते हैं, ( तत्प्रमाणं—भगवद्गीतायां, "देवान् भावयतानेन तेदेवा भावयन्तु वः। परस्परं भावयन्तः श्रेयः परमवाप्स्यथ" इस यज्ञादि कर्मसे देवताओंका पूजन कर उनकी वृद्धि करो तब वह देव तुम्हारा मनोरथ पूर्ण करते हुए तुम्हारी वृद्धि करेंगे, ऐसे परस्पर एक दूसरे की वृद्धि करनेमें तुम और देवता दोनों श्रेष्ठ कल्याण को प्राप्त होंगे ) किन्तु हे सम्बन्धीजी आपका यह निरहेतु ( अकारण ) अर्चन ( सेवा, पूजा ) है इससे आपसे बढ़कर और नहीं है ॥ २९ ॥

कन्यापक्ष पद्यम्।

महाराज श्रीमज्जगतियशसाते धवलिते
पयः पारावारं परम पुरुषोऽयं मृगयते।
कपर्दी कैलासं सुरगणपतिः स्वं करिवरं
कलानाथं राहुः कमलभवनो हंसमिथुनम् ॥३०॥

टीका—हे महाराज! हे श्रीमान्! ( श्रीर्विद्यते इति श्रीमान् तत्सम्बुद्धौ ) ते यशसा ( कीर्त्या ) जगति धवलिते सति कोर्थः श्वेतीभूते सति अयं परम पुरुषः ( विष्णुः ) पयः पारावारं ( क्षीरसमुद्रं ) मृगयते कोर्थः अन्वेषते कपर्दी ( शिवः ) कैलासं (के जले लसतीति कैलासः) कैलास एव कैलासः सं मृगयते, सुरगणपतिः ( इन्द्रः ) स्वं करिवरं मृगयते, राहुः कलानाथं ( चन्द्रं ) मृगयते कमलभवनः ( ब्रह्मा ) हंसमिथुनं मृगयते। इत्यन्वयः ॥ ३० ॥

भाषा—हे महाराज ! हे श्रीमान् ! आपके यशसे जगत्के श्वेत होने पर परम पुरुष जो विष्णु वह अपना क्षीर समुद्र ढूंढने लगे, शिवजी कैलास ढूंढने लगे, इन्द्र ऐरावत हाथीको ढूंढने लगा, राहु चन्द्रमाको ढूंढने लगा, और ब्रह्मा हंस का जोड़ा ढूंढने लगे, कहने का तात्पर्य यह कि जब आपने परमोत्तम कार्य किये कि जिनके द्वारा आपके निर्मल यश की श्वेतता ( सफेदी ) त्रिभुवनमें छा गई उस समय देवताओंको यह चिन्ता हुई कि अहो अमुक महीश्वरजी का इतना विस्तृत सुयश फैला है कि समस्त लोक श्वेत हो गये । पश्चात् विष्णुजी ने कहा कि हम अपना क्षीर समुद्र तो ढूंढें, ऐसा न हो कहीं गड़बड़में पड़ जाय, तब ढूंढने लगे कहीं भी पता न लगा क्योंकि यश का रंग सफेद है और क्षीरसागर भी सफेद है, ऐसे ही शिवजी कैलासको, इन्द्र अपने हाथीको, राहु चन्द्रमाको और ब्रह्मा हंसके जोड़े-को खोजने लगे परन्तु सफेदमें सब सफेद चीजें मिल गईं किसीका भी ठीक पता न लगा । इसलिये आपके यशकी बड़ाई हम किस प्रकार कर सकते हैं, वास्तव में आप परम प्रशंसाके पात्र पवित्रान्तःकरण हैं, इसमें कुछ भी सन्देह नहीं ॥ ३० ॥

वरपञ्चो पद्यम् ।

यशः स्तोमं वक्तुं तवधृतचतुर्वक्त्रममितं
विधिं वीक्ष्यक्षामं पशुपतिरभूत्पञ्चवदनः ।
कृशोतात्मन्स्कन्दः षडकृतमुखान्यत्र विकलः
सहस्रास्यः शेषः क्षितितलमगाद्व्रीडवदनः ३१

टीका—हे सम्बन्धिन् । तव अमितं यशः स्तोमं (यशोवृन्दं) वक्तुं ( कथयितुं ) पशुपतिः ( महादेवः ) पंचवदनः अभूत्, किं कृत्वा विधिं ब्रह्माणं क्षामं ( क्षीणं ) वीक्ष्य (दृष्ट्वा) कथंभूतं विधिं

धृतचतुर्वक्त्रं तस्मिन् पशुपतौ कृशे ( असमर्थे ) सति * स्कन्दः ( कार्त्तिकेयः ) षट् मुखानि अकृत् अत्र ( अस्मिन् ) तवयशः कथने कार्त्तिकेयः अपि निष्फलः जातः नहिं शेषः तवयशः स्तोमं वक्तुं सहस्रास्यः अभूत सोऽपि व्रीडवदनः सन् क्षितितलं ( पातालं ) अगात् ( अतस्तवकीर्तिकथने जगति न कोऽपि क्षमः समर्थः । ) इत्याभिप्रायः ॥ ३१ ॥

भाषा—हे नंदनीजी ! आपके अमित ( प्रमाण ) यशोवृन्द वर्णन करनेको शिवजीने पाँच मुख धारण किये । क्योंकि ब्रह्माजी चारमुखधारी हैं, ( भावार्थ यह है कि जब चार मुखसे ब्रह्माजी आपके यश-समूहको न वर्णन कर सके तब शिवजीने विचारा कि हम पाँच मुख धारण कर कदाचित् कुछ कह सकें परन्तु वह भी अशक्त हुए ) तिन पशुपति ( शिव ) के असमर्थ होने पर कार्तिकेयने छः मुख धारण किये परन्तु हम आपके यश वर्णन करनेको षडानन भी समर्थ न हुए, तब आपके यश-समूह वर्णन करने को शेषजी ने हज़ार मुख धारण किये परन्तु वह भी लज्जितवदन होकर पाताल को पधार गये इसलिये आपकी कीर्ति वर्णन करने को संसार में कोई भी समर्थ नहीं है ॥ ३१ ॥

## विवाहस्य चतुर्थ दिने वक्तव्यम् ।

विवाहके चौथे दिन कहना चाहिये ।

### कन्यापक्षे पद्यम् ।

**पाकं पर्युषितं च पूर्वदिवसे पीयूषभोक्त्रा त्वया**
**भुक्तं मानविवर्जितं ह्यलवणं शाकं पयोन्नंखलम् ।**

---

* कार्त्तिकेयो महासेनः शरजन्मा षडाननः । पार्वतीनंदनः स्कन्दः सेनानीरग्निभूर्गुहः ॥ इत्यमरः ।

हे धर्मज्ञ ममावरस्य वचनं श्रुत्वेति तद्धीयतां
भोक्तव्यं पुनरद्य वेश्मनिसमं मित्रैर्विधेया स्थितिः

टीका—हे सम्बन्धिन्! पीयूष (अमृत) भोक्त्रात्वया पूर्व-दिवसे प्रथमदिने पर्युषितं पाकं अलवणं (लवणं रहितं) शाकं पयः अन्नंतु मा विवर्जितं (सत्कार शून्यं) यन्मयादत्तं तत्त्वया अ भुक्तं हे धर्म्मज्ञ (धर्म्मं जानातीति धर्म्मज्ञः सत्सम्बुद्धौ) मम अवरस्य (अधमस्य) इति वचनं श्रुत्वा तत् धीयतां (धार्यतां) पुनः एव अद्य दिने ममवेश्मनि (स्थाने) भोक्तव्यं अतः मित्रैः (सुहृद्भिः) समं स्थितिःविधेया। इतिप्रार्थये॥१२॥

भाषा—हे सम्बन्धीजी! पीयूष (अमृत) तुल्य भोजन करनेवाले जो आप तिन्होंने पहले दिन बासी पकवान मानरहित जो हमने दिया एवं अलोना शाक अन्न जल आदि, वह आपने भले प्रकार रुचिसे भोजन किया, हे धर्म्मज्ञ मुझ अधम (नीच) का यह वाक्य श्रवण करके जानना चाहिये और फिर भी आज हमारे यहाँ भोजन करना चाहिये अतः मित्रों समेत ठहरना चाहिये यह प्रार्थना करता हूँ ॥ १२ ॥

वरपक्षे पद्यम्।

जामाताशुभकन्यया वरपिताद्रव्यैश्च तद्बान्धवाः
पक्वान्नैः यशवस्तृणैः प्रवयसःशय्याभिरभ्यार्चिताः
भक्तिश्चेद्भवंतोऽस्ति तर्हितरुणा येऽत्रागता उत्सवे
तेभ्यश्चन्द्रमुखीःप्रयच्छ तरुणीःकन्दर्प पीडायुजः

टीका—हे सम्बन्धिन्! त्वया जामाताशुभकन्या अभ्यर्चितः (पूजितः) वरपिता द्रव्यैः अर्चितः (पूजितः) तद्बान्धवाः पक्वान्नैः अभ्यर्चिताः पशवः तृणैः अभ्यर्चिताः प्रवयसः (वृद्धाः) शय्याभिः अभ्यर्चिताः चेद्भवतः भक्तिः अस्तिः तर्हि (तदा) अत्र उत्सवे ये तरुणाः (युवानः) आगताः तेभ्यः कन्दर्पपीड़ायुजः चन्द्रमुखीः प्रयच्छ, देहीत्यर्थः ॥ २३ ॥

भाषा—हे सम्बन्धीजी ! आपने दमादको सुन्दर कन्या देकर पूजा अर्थात् प्रसन्न किया और उनके बन्धुओंको पकवानोंसे सन्तुष्ट किया, पशुओं-को चारा दाना देकर प्रसन्न किया तैसे ही वृद्धोंको शय्याओंसे अर्थात् अच्छे अच्छे पलंग और बिछौने देकर प्रसन्न किया, अब जो आपकी भक्ति (प्रेम) है तो इस उत्सवमें जो तरुण पुरुष कामसे पीड़ित आये हैं उनके लिये चन्द्रमुखी स्त्रियाँ भी दीजिये ( यही प्रार्थना है ) ॥ २३ ॥

कन्यापक्षे पद्यम् ।

फणीन्द्रस्ते गुणान्वक्तुं लिखितुं हैहयाधिपः
द्रष्टुमाखण्डलःशक्तः क्वाहमेनक्वतेगुणाः॥२४॥

टीका—हे सम्बन्धिन् ते ( तव ) गुणान् वक्तु ( कथयितुं ) फणीन्द्रः (शेषनागः) शक्तः लिखितुं हैहयाधिपः (सहस्रबाहुः) शक्तः द्रष्टु आखंडलः (इन्द्रः) शक्तः अतः अहं (तुच्छबुद्धिनरः) क्व, एतेते गुणाः क्व ( कथं वर्णयितुं शक्तः ) ॥ २४ ॥

भाषा—हे सम्बन्धीजी ! आपके गुण वर्णन करनेको शेषजी, और लिखनेको सहस्रबाहु, तथा देखनेको इन्द्र समर्थ हैं इसलिये कहाँ हम तुच्छ

बुद्धि मनुष्य और कहाँ आपके इतने गुण, उनके वर्णन करनेको कौन समर्थ हो सकते हैं ॥ २४ ॥

वरपक्षे पद्यम्।

कन्यारत्नपरिग्रहेण भवतां जातः प्रसन्नो वरः सम्बन्धीबहुवस्त्ररत्नतुरगैः सन्तुष्टतां प्राप्तवान्। येशिष्टा बहुभोजनैर्रसमयैर्माधुर्य्य वाक्यादिभि-र्भृत्याहर्षतरंगितैश्च विविधैःस्त्रीणां कटाक्षादिभिः

टीका—हे सम्बन्धिन्! भवतां कन्यारत्न परिग्रहेण (कन्यैव रत्नं तस्य परिग्रहस्तेन) वरः प्रसन्नः जातः बहुवस्त्र रत्नतुरगैः सम्बन्धी (समधी) सन्तुष्टतां प्राप्तवान् ये शिष्टाः (परिशेषाः) ते रसमयैः ( सरसैः ) बहुभोजनैः तृप्ताः जाताः तथा माधुर्य्यवाक्यादिभिः भृत्याः ( किङ्कराः ) प्रसन्नाः जाताः विविधैः हर्षतरंगितैः ( तरंगा संजाता हर्षैः तरंगिता हर्षेण तरंगितास्तैः ) स्त्रीणां कटाक्षादिभिः सर्व प्रसन्नाः जाताः ॥ २५ ॥

भाषा—हे सम्बन्धिन, आपकी कन्यारूपी रत्न पाकर वर प्रसन्न हुआ, एवं (और) बहुतसे वस्त्र रत्न अश्व (घोड़े) आदि पानेसे समधीजी प्रसन्न हुए, बाकी बराती छओ रसके बने अनेक भोजनोंसे तृप्त हुए, तथा ( तैसे ही ) मधुर वचनादिकोंसे किङ्कर (टहलुआ) लोग प्रसन्न हुए और विविध प्रकारके आनन्द भरे हुए स्त्रियोंके हावभाव कटाक्षोंसे समस्त मनुष्य सन्तुष्ट हुए, ( अतः आप परम प्रशंसनीय हैं ) ॥ २५ ॥

## कन्यापक्षे पद्यम् ।

**विद्यावृत्तियुताः प्रसन्नहृदया विद्वत्सुबद्धादराः**
**श्रीनारायणपादपद्मयुगलध्यानावधूतांहसः ।**
**श्रौताचारपरायणाः सविनया विश्वोपकारक्षमा**
**जाता यत्र भवादृशास्तदमलं केनोपमेयं कुलम् ॥**

टीका—हे सम्बन्धिन् ! यत्रकोर्थः यस्मिन् कुले भवादृशाः (युष्मत्सदृशाः) सर्वगुणसम्पन्नाः जाताः (उत्पन्नाः) तत् अमलं (स्वच्छं) कुलं केन (सह) उपमेयंस्यात्, किंविशिष्टाः भवादृशाः विद्यावृत्तियुताः विद्यायाः वृत्तिः विद्यावृत्तिः तया युताः) पुनः किंविशिष्टाः भवादृशाः प्रसन्नहृदयाः (प्रसन्नानि हृदयानि येषां ते) पुनः कीदृशाः भवादृशाः विद्वत्सु बद्धादराः (विद्वत्सु पण्डितेषु बद्धा आदराः सत्काराः यैः ते) पुनः कीदृशाः भवादृशः श्रीनारायणपादपद्ममेवयुगलध्यानावधूतां हसः श्रिया लक्ष्मया सहितो नारायणः श्रीनारायणः श्रीनारायणस्य पादौ श्रीनारायणपादौ श्रीनारायणपादावेव पद्म श्रीनारायणपादपद्मस्य युगलं श्रीनारायणपादपद्मयुगलं तस्य ध्यानेन अवधूतानि अंहांसि यैस्ते ) पुनः कीदृशाः भवादृशः श्रौताऽऽचारपरायणाः (श्रुतेः अयं श्रौतः श्रौतस्य वेदस्य आचारः श्रौताचारः श्रौताचारे परायणाः तत्पराः, इति ) पुनः कीदृशाः भवादृशाः सविनयाः

पुनः कीदृशाः भवादृशाः विश्वोपकारक्षमाः (विश्वस्य संसारस्य उपकारं कर्तुं क्षमाः समर्थाः ये ते ) ॥ ३८ ॥

भाषा—हे सम्बन्धी महोदय ! जिस कुलमें आपके तुल्य सर्वगुणसम्पन्न सज्जन उत्पन्न हुए, वह उज्ज्वल कुल किसके साथ उपमा देने योग्य है; कैसे हैं आप कि विद्या ही की वृत्ति व्यवसाय आजीविका है जिनकी, फिर कैसे हैं आप कि प्रसन्न हृदय अर्थात् सदा आनन्दित रहता है मन जिनका, फिर कैसे हैं आप कि विद्वानों ( पण्डितों ) में बाँधे हैं आदर जिन्होंने अर्थात् पण्डितों में होता है सत्कार जिन्होंका, फिर कैसे हैं आप कि श्रीमन्नारायण के चरणाम्बुजोंका ध्यान करनेसे नाश किये हैं पाप जिन्होंने, फिर कैसे हैं आप कि वेदोक्त सदाचारमें तत्पर, फिर कैसे हैं आप कि विनय (नम्रता) से युक्त हैं, फिर कैसे हैं आप कि समस्त जगत्का उपकार करने में समर्थ हैं। ( ऐसे आप लोगोंकी और आपके कुलकी प्रशंसा एक मुखसे हम कैसे कर सकते हैं) अर्थात् कदापि नहीं ॥ ३९ ॥

## वरपक्षे पद्यम् ।

त्वंनित्यं सकलाः कलाः कलयसे प्रोद्भासिपक्षद्वये
सम्पूर्णोऽपिकलंकतां न भजसि प्रीतोऽसिमित्रोदये
मैत्रीं यासि बुधैस्समं सरलतां धत्सेजनौघेऽखिले
त्वय्येवाद्विजराजताविजयते या श्रूयते भूतले ॥

टीका—हे सम्बन्धिन् ! याद्विजराजता भूतले ( पृथ्वीतले ) श्रूयते सा त्वयि एव विजयते ( वर्तते ) तत्किं तदाह, त्वंनित्यं सकलाः कलाः कलयसे पक्षद्वये प्रोद्भासि, सम्पूर्णः अपि कलंकतां न भजसि, एवंमित्रोदये प्रीतः असि, बुधैः ( विद्वद्भिः )

समं मैत्रीं ( सख्यं ) यासि, अखिले ( समस्ते ) जनौघे ( जायते इति जनः जनानां ओघः समूहः तस्मिन् ) सरलतां धत्से ॥३७॥

भाषा—हे सम्बन्धिन् ! जो द्विजराजता पृथ्वीमंडल में सुनी जाती है वह आपही में वर्तमान है, वह क्या कि आप सदा समस्त कलाओंको धारण करते हो और दोनों पक्ष ( मातृ और पितृ पक्ष ) में उदयको प्राप्त होते हो और सम्पूर्ण होनेपर भी कलंकी नहीं होते हो, तथा मित्रोंके उदय में प्रसन्न होते हो और बुध जो पंडित हैं उनके साथ मैत्री ( मित्रता ) रखते हो, एवं मनुष्योंके छन्दमें सरलता ( सिधाई ) को धारण करते हो ( अतः आपको कोटिशः धन्यवाद देते हैं ) ॥ ३७ ॥

कन्यापक्षे पद्यम् ।

जरीहर्ति जाड्यं जनानामजस्रं
दरीधर्ति धर्मं विना कायकष्टम् ।
परीपर्ति सर्वं मनोवाञ्छितं य-
चरीकर्ति किं भवद्दर्शनं न ॥३८॥

टीका—हे सम्बन्धिन् ! भवद्दर्शनं किंकिन चरीकर्ति कोर्थः अतिशयेन सर्वंकरोतीति जनानां ( नराणां ) जाड्यं ( जडत्वं ) अजस्रं ( सर्वदा ) जरीहर्ति, कायकष्टं ( शरीरक्लेशं ) विना धर्मं दरीधर्ति, यत्सर्वं मनोवांछितं तत्सर्वं परीपर्ति ॥ ३८ ॥

भाषा—हे सम्बन्धीजी ! आपका दर्शन क्या क्या नहीं करता अर्थात् विशेष करके सब कुछ करता है, नरों की मूर्खता को सदा अतिशय करके हरता है एवं शरीर क्लेश के विना अत्यन्त धर्म को धारण करता है। तथा मनकी सब अभिलाषाओं को अतिशय करके पूर्ण करता है ॥ ३८ ॥

वरपक्षे पद्यम् ।

दूरेऽपि श्रुत्वा भवदीयकीर्तिं
कर्णौ च तृप्तौ न तु चक्षुषी मे ।
तयोर्विवादं परिहर्तुकामः
समागतोहं तव दर्शनाय ॥३९॥

टीका—हे सम्बन्धिन् ! भवदीयकीर्तिं अतिकीर्थः निश्चयेन दूरे एवं श्रुत्वा मे ( मम ) कर्णौ ( श्रवणे ) तृप्तौ ( परन्तु ) चक्षुषी ( नेत्रे ) नहि तृप्तौ ( अतः ) तयोः कर्णचक्षुषोः परस्परं ( अन्योन्यं ) विवादं जातं तत्परिहर्तुं ( दूरीकर्तुं ) कामः तव दर्शनाय अहं समागतः । ( भवान् यादृशोऽस्माभिः श्रुतः तादृश एव दृष्टः ) ॥ ३९ ॥

भाषा—हे सम्बन्धिन् ! आपके यशको निश्चय करके दूरहीसे सुनके हमारे दोनों कान तो तृप्त हो गये, परन्तु नेत्र न तृप्त हुए इसलिये कर्ण और नेत्रोंका परस्पर ( आपस ) में विवाद ( झगड़ा ) हुआ; इसे दूर करनेके हेतु आपके दर्शनार्थ हम यहाँ आये सो जिस प्रकार कानोंसे सुना था वैसा ही आपको आंखोंसे देखा ( तब तो नेत्रों को भी विश्वास हो गया कि हाँ श्रवणों का कथन परम सत्य है ) ॥ ३९ ॥

कन्यापक्षे पद्यम् ।

न कम्पयन्ति के शिरो निशम्य तावकं यशः
पयःपयोधिनिर्मलं द्विजेन्द्र भो जगत्त्रये ।

अतः पितामहोविभुर्भुजङ्गमेश्वरस्य नो
चकार शब्दधारकं धराविघातशङ्कया ॥४० ॥

टीका—भोः द्विजेन्द्र पयः पयोधिनिर्मलं कोर्थः दुग्धसमुद्रवदमलं एतादृशं तावकं (त्वदीयं) यशः (कीर्ति) निशम्य (श्रुत्वा) जगत्त्रये (त्रिलोक्यां) के शिरः न कम्पयन्ति (अपितु सर्वे कम्पयन्ति) अतः कारणात् पितामहो (ब्रह्मा) विभुः धराविघातशंकया भुजंगमेश्वरस्य कोर्थः शेषस्य शब्दधारकं (श्रवणं) नो चकार ॥ ४० ॥

भाषा—हे द्विजेन्द्र ! क्षीरसागर समान अत्यंत उज्वल आपके यशको सुनकर त्रिभुवनमें कौन मनुष्य हैं जो शिर नहीं हिलाते अर्थात् सबही हिलाते हैं, इसीसे ब्रह्माजीने पृथ्वी गिरनेकी शंकासे शेषजीके कान नहीं बनाये, ( यदि बनाते तो आपका यश सुनकर शेषजी शिर अवश्यही हिलाते तब पृथ्वी उलट पलट होनेमें संदेहही क्या था ऐसा आपका यश है ॥४०॥

वरपद्ये पद्यम् ।

ब्रह्मन् समाकर्ण्य यशस्त्वदीयं
शिरांसि के नैव विधूनयन्ति ।
ध्रुवं धराभङ्गभयेन धात्रा
नाकारि कर्णौ भुजगाधिपस्य ॥४१॥

टीका—हे ब्रह्मन् त्वदीयं ( तावकं ) यशः समाकर्ण्य कोर्थः श्रुत्वा के ( पुरुषाः ) शिरांसि न विधूनयन्ति ( न कम्पयन्ति )

अतः ध्रुवं ( निश्चयेन ) धात्रा ( चतुराननेन ) धराभंगभयेत ( पृथ्वीविप्लवशंकया ) भुजगाधिपस्य कोऽर्थः शेषस्य कर्णौ न अकारि ॥ ४१ ॥

भाषा—हे भगवन्, आपके यशको सुनकर कौन मनुष्य नहीं मस्तक हिलाते अर्थात् प्रायः सबही हिलाते हैं इसीलिये निश्चय करके ब्रह्माजीने पृथ्वीके उलट पलट होनेकी शंकासे शेषजीके कान नहीं निर्माण किये (ऐसा परम प्रशंसनीय आपका सुयश है ) ॥ ४१ ॥

## विवाहस्य चतुर्थदिवसे निशिवाच्यम् ।

विवाहके चौथे दिन ( बड़ी बढ़हार ) रातमें कहना चाहिये ।

### कन्यापक्षे पद्यम् ।

यत्पूर्वं श्रमतापहारणमयं पाद्यं निवेद्यं कृतं
भोज्यं चापि न तादृशं तदधुना वक्तुं न युक्तं वचः।
अद्य श्रीद्विजराज ! पावनतया लब्धः स मे मंदिरे
सन्तोषामृतपूरितेन मनसा भूयो विधेया स्थितिः।

टीका—हे सम्बन्धिन् । यत्पूर्वं श्रमतापहारणमयं पाद्यं निवेद्यंकृतं अपि तादृशं भोज्यं च न दत्तं अधुना तत् वचः व वक्तुं ( कथयितुं ) न युक्तं हे श्रीद्विजराज अद्य तत् पावनतया ( पवित्रतया ) ये मन्दिरे ( ममगृहे ) त्वया लब्धं ( प्राप्तं ) सन्तोषामृतपूरितेन मनसा भूयः स्थितिः विधेया ॥ ४२ ॥

भाषा—हे सम्बन्धिन् ! हमने पहले श्रम और तापनिवारण करनेवाला

जो यह पाद प्रक्षालनके लिये जल निवेदन किया निश्चय करके वैसा भोजन नहीं दिया । सो इस समय कुछ कहनेका हम योग्य नहीं हैं । हे द्विजराज आज वही भोजन पवित्रतासे अर्थात् प्रीतिपूर्वक हमारे स्थानमें आपने पाय इससे सन्तोषरूपी अमृतसे भरे हुए चित्तसे आपको फिर. भी ठहरना चाहिये ॥ ४२ ॥

वरपक्षे पद्यम् ।

स्वेच्छामिष्टान्नभोज्यं जलममृतमयं
दिव्यताम्बूलशुभ्रं
हार्यं प्रासाद चित्रं मणि मय जटितं
दिव्य पर्यंक शय्या ।
रागोगान्धर्वगानं कुशल परिमलं
भामिनीमान रम्यं
कल्याणं पूर्णकामं जनक तवगृहे
प्राप्त वैकुण्ठ लोके ॥४३॥

टीका—हे जनक, प्राप्त वैकुंठ ( विगतः कुंठः क्लेशः यस्मिन् स विकुंठः विकुंठ एव वैकुंठः) * लोके तवगृहे स्वेच्छामिष्टान्न-भोज्यं प्राप्नोति, अमृतमयं जलं प्राप्नोति, दिव्यताम्बूलशुभ्रं हार्यं ( प्राप्तं ) मणिमयजटितं प्रासादश्चित्रं प्राप्तं दिव्यपर्यंकशय्या-प्राप्ता, गांधर्वगानं रागश्च श्रुतः तथा कुशलपरिमलं प्राप्यते,

* लोकस्तु भुवनेजने । इत्यमरः ।

किंच मानिनीमानरम्यं पूर्णकामं भवति तथैव कल्याणं प्राप्तं ॥ ४३ ॥

भाषा—हे सम्बन्धिन् जनक ! प्राप्त है वैकुंठ लोक जिसमें ऐसे आपके सदनमें इच्छानुकूल मिष्टान्न भोजन प्राप्त हुआ, एवं सुधाके तुल्य जल मिला, हमको सुन्दर और स्वच्छ ताम्बूल खानेको प्राप्त हुआ, मणिजटित विचित्र प्रासाद कहिये महल रहनेको मिला, सुन्दर पलंग शयन करनेको मिला, गानेवाले गंधर्वोंसे गीतराग भी सुने, तैसेही चित्तको आनन्ददायक परम सुगन्धित इतर प्राप्त हुआ, और सुन्दर मानिनी स्त्रियोंके मान ( हाव भाव कटाक्षों ) से काम भी पूरा हुआ, उसी प्रकार कल्याण प्राप्त हुआ, ( वाह क्यों न हो, आपसे सज्जनोंके यहां मृत्यु लोकमें भी वैकुण्ठका सुख वर्तमान है, अतः आप धन्य हैं ) ॥ ४३ ॥

## कन्यापक्षे पद्यम् ।

यत्पादाब्जरजः कणेन सकुला जाता पवित्रा वयं
स त्वं मे गृहमागतोऽसि कृपया श्रीविप्रवृन्दप्रभो ।
किं तद्वस्तु समर्पयामि भवते विप्रेन्द्र एतच्छ्रमः
कन्यापाणिपरिग्रहेण भवता भृत्या वयं केवलम् ४४

टीका—हे भोः श्रीविप्रवृन्दप्रभो यत्पादाब्जरजः कणेन सकुलाः ( सकुटुम्बाः ) वयं पवित्राः ( शुद्धाः ) जाता सत्त्वं कृपया मे गृहं कोर्थः मम सद्म आगतः असि हे विप्रेन्द्र तत् किं वस्तु यत् भवते ( तुभ्यं ) समर्पयामि एतच्छ्रमः वयं केवलं कन्यापाणिपरिग्रहेण भवतां ( युष्माकं ) भृत्याः ( सेवकाः ) इत्याशयः ॥ ४४ ॥

भाषा—हे श्रीविपटंकके स्वामिन्, जिनके पादाम्बुज ( चरणारविन्द ) की रजके कारणते कुटुम्ब समेत हम पवित्र हो गये सो आप कृपापूर्वक हमारे घरमें आये हैं। हे द्विजेन्द्र ( ब्राह्मणोंमें श्रेष्ठ ) सो वह कौन चीज है जो आपके लिये समर्पण करूँ यह मुझको भ्रम है, हम केवल सुता के विवाह करने से आपके किंकर हैं ॥ ५४ ॥

## वरपक्षे पद्यम्।

सम्बधिन्किमिदंत्वयानिगदितंस्वर्गाधिकेत्वत्पुरे
स्त्रीरत्नादिविभूषितं सुनितरां प्राप्तं ह्यनन्तं सुखम्
वत्स्यामोऽमृततुल्यपूर्वदिवसे पाकादितुष्टोदरा
भुक्तं चाद्यचतुर्विधंसुगिलितं प्रेम्णासमित्रावयम्

टीका—हे सम्बन्धिन् त्वया इदं किं निगदितं ( प्रकथितं ) स्वर्गाधिके ( स्वर्गात् अधिके ) स्त्री रत्नादिविभूषितं ( मणया-द्यलंकृतं ) त्वत्पुरे मया सुनितरां अनंतं सुखं प्राप्तं, पूर्वदिवसे अमृततुल्यपाकादितुष्टोदराः ( अमृततुल्यैः पाकादिभिस्तुष्टं उदरं येषान्ते वयं वत्स्यामः अद्यचतुर्विधं सुगिलितं ( निगिलितं ) भुक्तं च प्रेम्णा ( प्रीत्या ) समित्राः ( मित्रैः सहिताः ) वयं हृष्टा ( प्रसन्ना ) जाताः ॥ ५५ ॥

भाषा—हे सम्बन्धिन्! आपने यह क्या कहा, स्वर्गसे अधिक स्त्रीरत्न विभूषित ( शोभित ) आपके पुरमें हमको बहुत ही अधिक सुख प्राप्त हुआ और पहले ही दिनमें अमृत समान पाक ( भोजन ) से सन्तुष्ट हैं पेट जिनके ऐसे हम निवास करेंगे सो आज चार प्रकार का ( भक्ष्य, भोज्य,

लेह्य, चोष्य, ) भोजन किया और आपके प्रेमसे मित्रों समेत प्रसन्नताको प्राप्त हुए ॥ ४५ ॥

कन्यापक्षे पद्यम् ।

सम्बन्धेन पवित्रितं कुलमिदं पादाब्जधूलीलवै-
रावासो गमितश्च तीर्थपदवीं नीता वयं धन्यताम्
सूर्याचन्द्रमसौ विभूषणमणी यावज्जगत्यां यशः
तावत्कुन्दकरीन्द्रकैरवरुचिप्रख्यापितं नस्त्वया ॥४६

टीका—हे सम्बन्धिन् ! भवत्सम्बन्धेन इदं कुलं पवित्रं जातं च भवत्पादाब्ज ( त्वच्चरणाम्बुज ) धूलीलवै मे आवासः ( स्थानम् ) तीर्थपदवीं ( तीर्थतुल्यतां ) गमितः कोर्थः प्राप्तः तथा वयं धन्यतां नीताः यावत् जगत्यां ( पृथिव्यां ) सूर्याचन्द्रमसो विभूषणमणी तावत् कुन्दकरीन्द्रं कैरवरुचिनः कोर्थः अस्माकं यशः त्वया प्रख्यापितमित्यर्थः ॥ ४६ ॥

भाषा—तुम्हारे इस सम्बन्धसे हमारा यह कुल पवित्र हुआ और तुम्हारे चरणारविन्दकी धूलके कणोंसे हमारा स्थान तीर्थके तुल्य हो गया और हमलोग धन्य ( प्रशंसाके योग्य ) हुए, जबतक इस पृथ्वीपर सूर्य चन्द्र विभूषण मणि हैं तब तक कुन्द पुष्प और ऐरावत हस्ती एवं कुमुदिनी, कीसी दीप्ति ( चमक ) है जिसका ऐसा अपना यश संसारमें आपने हमको विख्यात ( प्रकट ) किया ॥ ४६ ॥

वरपक्षे पद्यम् ।

आप्ता वयं गौरवमद्य नूनं
सुहृज्जनानां भवतां प्रसङ्गात् ।
महीरुहाश्चन्दनपादपानां
सरिद्वरायाः इव वारिवाहाः ॥४७॥

टीका—हे सम्बन्धिन् ! सुहृज्जनानां भवतां प्रसंगात् (संसर्गात्) अद्यकोर्थः अस्मिन्दिवसे नूनं (निश्चयेन) वयं गौरवं (महत्वं) प्राप्ताः चन्दनपादपानां कोर्थः चन्दनवृक्षाणां प्रसंगात् महीरुहाः (अन्यद्रुमाः) इव सरिद्वरायाः (गंगायाः प्रसंगात्) वारिवाहाः (वारीणि जलानि वाहयन्तीति वारिवाहाः, स्वल्पस्त्रोतोवहाः) इव वयमपि भवतां प्रसंगात् गौरवं प्राप्ताः । इत्याशयः ॥ ४७ ॥

भाषा—हे सम्बन्धीजी ! सुहृज्जन जो आप तिनके संसर्ग (मेल) से आज के दिन निश्चयपूर्वक हम सब लोग गौरव (बड़ाई) को प्राप्त हुए, जैसे चन्दनके वृक्षोंके मेलमे और वृक्ष भी वैसेही हो जाते हैं और जिस प्रकार गंगाजीके संसर्गसे छोटी छोटी नदियोंको बड़प्पन प्राप्त हुआ, उसी प्रकार हम लोगोंने भी आपके प्रसंग (मेल) से बड़ाई (गौरवता) पाई ॥ ४७ ॥

कन्यापक्षे पद्यम् ।

ब्रह्मासीच्चतुराननोगुणगणान्वक्तुं न शक्तः शिवः
पञ्चास्यस्तु तदाभवद्दशमुखोजातस्तु तस्मात्सुतः

वक्त्राणां च सहस्रमेव धृतवान् वाताशनोनप्रभु-
र्लज्जाभारनतो विवेश धरणीमद्यापिनोद्वर्तते ॥

टीका—हे सम्बन्धिन् ! तव गुणगणान् वक्तुं ( कथयितुं ) ब्रह्मा चतुराननः चत्वारि आननानि मुखानि यस्य सः) आसीत् किन्तु न शक्तः तथा शिवः पंचास्य ( पंचआस्यानि मुखानि यस्य सः ) अभवत् तथापि गुणगणान्वक्तुं न शक्तः (न समर्थः) तस्मात् कोर्थः शिवात् रसमुख ( षण्मुखः ) सुतः जातः सोऽपि न शक्तः च पुनः वाताशनः ( वातं वायुंअश्नातीति, शेषः ) वक्त्राणां सहस्रं धृतवान् किन्तु न प्रभुः ( न शक्तः ) अतएव लज्जाभारनतः सन् धरणीं विवेश अद्यापि नो उद्धर्तते ॥४८॥

भाषा—हे सम्बन्धीजी ! आपके गुणोंके कहनेके लिये ब्रह्माने चार मुख धारण किये परन्तु कह न सके, तब शिवजीने पांच मुख धारण किये किंतु वे भी न कह सके; तब कार्तिकेयने छः मुख धारण किये परन्तु वह भी न कह सके, तब शेषजीने हजार मुख धारण किये और वह भी न कह सके इसलिये लज्जा से नीचा मुख करके पृथ्वी में घुस गये और आजतक नहीं लौटे ( ऐसी आपके गुणोंकी गम्भीरता और श्रेष्ठता है ) ॥ ४८ ॥

वरपक्षे पद्यम् ।

माधुर्यादिगुणैर्जुषां सुवचसां रीत्यादिसंशोभिनां
सर्वालंकृतिशालिनां कलयसे सम्यग्रसास्वादनम् ।
सत्काव्यार्थविभावनैकनिपुणः प्राज्ञोसितेनास्म्यहं
कीर्तिस्यूतगुणादिवर्णनविधौ जातस्तवोत्कंठितः

टीका—हे सम्बन्धिन् ! माधुर्य्यादिगुणैः (मधुरस्य भावः माधुर्य्यं माधुर्य्यं आदिर्येषान्ते माधुर्य्यादयः ते च ते गुणाः तैः) जुष्टं रीत्यादि संशोभिनां सर्वालंकृतिशालिनां सुवचसां (शोभन वाक्यानां) रसास्वादनं सम्यक् कलयसे सत्काव्यार्थविभावनैकनिपुणः (सत्काव्यस्य अर्थविभावनायां एक एव निपुणः चतुरः) त्वं प्राज्ञः असि तेन कारणेन अहं नव कीर्तिस्यूतगुणादिवर्णनविधौ उत्कंठितः जातः अस्मोत्यर्थः ॥ ४९ ॥

भाषा—हे सम्बन्धीजी ! आप माधुर्यादि गुणों सहित अपने प्यारे वाक्योंसे और सम्पूर्ण भूषणोंसे शोभित सुंदर वचनोंके रसके स्वादको भली विधि जानते हो और श्रेष्ठ कविताके अर्थके विचारमें एकही चतुर हो और आप प्राज्ञ (पण्डित) हो, इसीलिये मैं आपकी कीर्तिसे युक्त गुणादिकोंके वर्णन करनेको उत्कंठित हुआ हूँ अर्थात् और कुछ कहनेकी इच्छा हुई है ॥ ४९ ॥

## दानकाले वाच्यम् ।

दान समयमें कहना चाहिये ।

### कन्यापक्षे पद्यम् ।

अपां निधिं वारिभिरर्चयंति
दीपेन सूर्यं प्रतिबोधयंति ।
ताभ्यां तयोः किं परिपूर्णतास्ते
भक्त्यैव तुष्यन्ति महाऽनुभावाः ॥५०॥

टीका—हे सम्बन्धिन् ! भक्तजनाः वारिभिः कोर्थः जलैः अपांनिधिं ( सागरं ) अर्चयन्ति, दीपेन सूर्यं प्रतिबोधयन्ति, कोर्थः प्रसन्नं कुर्वन्ति,ताभ्यां कोर्थः वारिदीपाभ्यां तयोः सागर-सूर्ययोः किं परिपूर्णता अस्ति, महानुभावाः ( महान् अनुभावः प्रभावो येषान्ते भक्त्या एव तुष्यन्ति कोर्थः सन्तुष्टतां प्राप्नुवन्ति ॥ ५० ॥

भाषा—हे सम्बन्धीजी ! भक्त लोग जलकी धाराओंसे समुद्रको पूजते हैं और दीपकसे अर्थात् आरती करके सूर्यको संतुष्ट करते हैं तो क्या जल और दीपकसे सागर ( समुद्र ) तथा सूर्यकी परिपूर्णता होती है अर्थात् कभी नहीं होती, परन्तु कहनेका अभिप्राय यह है कि महानुभाव ( अत्यन्त प्रभावशाली, महात्मा पुरुष ) भक्तिही से संतुष्ट होते हैं ॥ ५० ॥

वरपक्षे पद्यम् ।

दातारः पुरुषा न तत्र सुदृशामौदार्यमासाद्यते
दारा यत्र भवन्त्युदारमनसः पुंसाञ्चनोदारता ।
युष्मत्सद्मनि सर्व एव पुरुषा दारा वदान्योत्तमा
यो यो यद्यदिहेच्छति प्रणयतस्तत्तत्प्रदानक्षमाः

टीका—हे सम्बन्धिन् । यत्रकोर्थः यस्मिन्भवने पुरुषाः ( नराः ) दातारो भवन्ति, तत्रकोर्थः तस्मिन्सदने सुदृशां ( नारीणां ) औदार्य्यं ( उदारस्य भावः औदार्यं ) न आसाद्यते कोर्थः न प्राप्यते च ( पुनः ) यत्र दाराः ( भार्य्याः ) उदारमनसः ( वदान्यचेतसः ) भवन्ति तत्र पुंसां ( पुरुषाणां )

उदारता न भवति परन्तु युष्मत्सद्मनि ( त्वद्भवने ) सर्वे पुरुषाः दाराश्च वदान्योत्तमाः सन्ति यत् इह ( अस्मिन्स्थाने ) यः यः यत् यत् इच्छति तद्वस्तु प्रणयतः ( प्रेम्णा ) उदारोत्तमाः कीर्थं दानसमर्थाः सन्ति ॥ ५१ ॥

भाषा—हे सम्बन्धिन् ! जिस गृहमें पुरुष दानी होते हैं वहांकी स्त्रियोंमें उदारता नहीं पाई जाती और जिस स्थानमें स्त्रियां उदार ( दानशीला ) होती हैं वहांके पुरुषोंमें उदारता नहीं होती परन्तु आपके यहाँ तो समस्त पुरुष और स्त्रियां अति उदार और उत्तम हैं क्योंकि यहां जो जो मनुष्य जिस जिस वस्तुकी कांक्षा करता है उसको वह वह वस्तु प्रेमपूर्वक अर्पण देनेको समर्थ हैं ॥ ५१ ॥

कन्यापक्षे पद्यम् ।

सन्तर्पितोसि न मया सुमहार्घवस्त्रैः
सम्मानितोऽसि न मृदुस्फुटवाग्भिरर्थैः ।
प्रीत्यापिनो अशनसेवनकौतुकाद्यैः
कन्यां हि किन्तु प्रददामि प्रमार्जितुं गृहम् ५२

टीका—हे सम्बन्धिन् ! मया त्वं सुमहार्घवस्त्रैः न सन्तर्पितः असि, मृदुस्फुटवाग्भिरर्थैः न सम्मानितः असि, प्रीत्याऽपि अशनसेवनकौतुकाद्यैर्नोसम्मानितः असि, हि ( इतिनिश्चयेन ) किन्तु गृहं प्रमार्जितुं कन्यां प्रददामि ॥ ५२ ॥

भाषा—हे सम्बन्धीजी ! हम लोगोंसे आप बहुमूल्य वस्त्रोंसे तृप्त नहीं किये गये कोमल और स्पष्ट वाणी तथा धनसे भी नहीं सम्मानित हुए

प्रीतिपूर्वक भोजन, सेवन और उत्साहसे भी आदर नहीं किया गया किन्तु आपके घरके मार्जन ( झाड़ने बुहारने ) के लिये कन्यामात्र ही देते हैं ( सो इसको कृपया अपनाना आपका मुख्य कर्तव्य है अधिक क्या कहें ॥ ५२ ॥

वरपक्षे पद्यम्।

कन्यारूपवती कुलं सुविमलं कीर्तिश्च दिग्व्यापिनी
लक्ष्मीर्मेरुसमा सुवाजिनिवहा उच्चैःश्रवास्पर्द्धिनः
दासीनां शतकं च भोजनमिदं सुस्वादु मत्यद्भुतं
सम्बन्धे भवतां कृतंसुकृतिनां किं किं न लब्धं मया

टीका—हे सम्बन्धिन्! प्रथमतस्तु रूपवती (रूपमस्यास्तीति रूपवान् कन्याचेत् ) कन्या ( सुता ) प्राप्ता ( लब्धा ) सुविमलं ( सुष्ठु निर्मलं ) कुलं प्राप्तं च दिग्व्यापिनी कीर्तिः (यशः) प्राप्ता मेरुसमाः लक्ष्मीः प्राप्ता, उच्चैःश्रवास्पर्द्धिनः ( उच्चैः श्रवाः तुल्याः ) सुवाजिनिवहाः ( श्रेष्ठाश्व वृन्दाः ) प्राप्ताः दासीनां शतकं प्राप्तं पुनः सुस्वादुं अति अद्भुतं च भोजनं प्राप्तं, भवतां सुकृतिनां कोर्थः पुण्यवतां सम्बन्धे कृते मया किं किंन लब्धं कोर्थः सर्वमेव लब्धं प्राप्तमित्यर्थः ॥ ५३ ॥

भाषा—हे सम्बन्धीजी! प्रथम तो रूपवती कन्या प्राप्त हुई और सुन्दर निर्मल कुल मिला, दिशाओंमें व्याप्त होने ( फैलने ) वाली कीर्ति भी मिली, सुमेरु पर्वत तुल्य द्रव्य मिला और इन्द्र के अश्व समान बहुत घोड़े प्राप्त हुए, सैकड़ों दासियाँ मिलीं, पुनः अत्यन्त स्वादिष्ट और अद्भुत भोजन

मिले देते आप पुरुषत्तमोंके सम्बन्ध होनेसे इनका क्या क्या नहीं मिला अर्थात् सब कुछ प्राप्त हुआ ॥ ५३ ॥

कन्यापक्षे पद्यम्।

यस्य श्रीर्गृहिणी गृहं त्रिभुवनं भोज्यं सुधा कौस्तुभो ऽलङ्कारो मणिरासनं खगपतिः शय्याप्यनन्ताधरः वाणी वेदमयी चराश्च विबुधाः पादोदकं स्वर्धुनी तस्मै श्रीहरये किमन्यदधिकं यत्तत्प्रयोज्यामहे ५४

टीका—हे सम्बन्धिन् ! यस्य श्रीः (लक्ष्मीः) गृहिणी (भार्या) अस्ति त्रिभुवनं (लोकत्रयं) गृहं अस्ति, सुधा (अमृतं) भोज्यं अस्ति, कौस्तुभोमणिः अलंकारः (विभूषणं) अस्ति आसनं (वाहनं) खगपतिः कोर्थः गरुडः अस्ति अनन्ताधरः (शेषः) शय्या अस्ति, वेदमयी वाणी अस्ति च (पुनः) विबुधाः (सुराः) चराः (किंकराः) सन्ति, पादोदकं (चरणजलं) स्वर्धुनी (गंगा) अस्ति. तस्मै श्रीहरये यत् अन्यत् अधिकं तत्किं वयं प्रयोज्यामहे ॥ ५४ ॥

भाषा—हे सम्बन्धीजी ! जिनकी भार्या लक्ष्मी और तीनों भुवन गृह और सुधा (अमृत) जिनका भोजन है; कौस्तुभमणि जिनका आभूषण है और गरुड़ जिनका वाहन है और शेषजीका अधर जो अंग सो है शय्या, और वेद जिनकी वाणी, देवता जिनके किंकर और गंगाजी जिनके चरणका प्रक्षालन (धोवन) हैं तब इनसे अधिक और क्या वस्तु है जो हम तिन हरि भगवानके लिये समर्पण करें ॥ ५४ ॥

## वरपक्षे पद्यम्।

**कन्या श्रीरिव रूपिणी गुणवती शुद्धं कुलं भूतले**
**वित्तं रौप्यसुवर्णभूरिविमला कीर्तिश्च दिग्व्यापिनी**
**पात्राणां च शिरोमणिस्त्वमधुना लब्धानि पञ्चामुना**
**सम्बन्धेन भवादृशां परमहो लब्धानि रत्नानि किम्॥**

टीका—हे सम्बन्धिन्! भवादृशां (युष्मत्सदृशां) अमुना अनेन सम्बन्धेन परं (श्रेष्ठं) पंचरत्नानि लब्धानि तान्याह श्रीः (लक्ष्मीः इव कन्या प्राप्ता, कीदृशी कन्या रूपिणी (रूपमस्त्यस्याः) पुनः कीदृशी कन्या गुणवती (गुणाःविद्यन्ते यस्यां सा) पुनः भूतले (भूम्यां) शुद्धं कुलं प्राप्तं तथा रौप्यसुवर्णभूरिवित्तं (धनं) प्राप्तं, दिग्व्यापिनी (दिक्षु व्याप्नोतीति सा) विमला (निर्मला) कीर्तिश्च प्राप्ता, अधुना (इदानीम्) पात्राणां शिरोमणिस्त्वं च प्राप्तः, अहो किं न लब्धं अपितु सर्वमेव लब्धं प्राप्तमित्यभिप्रायः॥ ५५॥

भाषा—हे सम्बन्धिन्! आपके इस सम्बन्धसे श्रेष्ठ पाँच रत्न प्राप्त हुए वह कौन हैं सो कहते हैं। प्रथम तो लक्ष्मीके सदृश कन्या मिली। कैसी है कन्या कि रूपवती है, फिर कैसी है कन्या कि गुणोंसे भरी हुई है, दूसरे पृथ्वीमें निष्कलङ्क कुल प्राप्त हुआ, तीसरे चांदी सोना ऐसा बहुत द्रव्य मिला, चौथे दिशाओंमें फैलनेवाली ऐसी निर्मल कीर्ति प्राप्त हुई, पाचवें इस समय पात्रोंमें शिरोमणि आप मिले। अहो! क्या नहीं मिला अर्थात् सब कुछ आपसे हमको मिला। इसलिये आप सर्वदा सर्वोपरि सराहनीय हैं॥ ५५॥

शाम्नातालांक भूहायने कार्तिक
कृष्णपक्षे दशम्यां शनेर्वासरे।
पञ्चपञ्चाशिका मन्निलालेन वै
संगृहीता सतां प्रीतये शोभना।

भाषा—विक्रमीय सं० १९७६ कार्तिक कृष्णा दशमी शनिवार में श्रेष्ठ पुरुषों की प्रसन्नता के निमित्त मन्नीलाल ( मिश्र ) द्वारा सुन्दर पंचपंचाशिका निश्चय पूर्वक संग्रह की गई।

ग्रन्थकारपरिचयः।

श्रीकान्यकुब्जमहिदेवकुले प्रशस्तेऽ-
भूत्तार्वतीशचरणानुगमातृदत्तः।
विद्याप्रगल्भनिरतेषु च पण्डितेषु
ख्यातोबभूवबुधवृन्दसमर्चितांघ्रिः ॥१॥
तस्यात्मजो बालमुकुन्दमिश्र
आसीत्सदाचारविचारदक्षः।
तज्ज्ञः कृतज्ञश्च बुधो गुणज्ञो
धीमान्दयाब्धिश्च परावरज्ञः ॥२॥
तस्यास्तिविद्वज्जनपादसेवी
पुत्रः प्रसिद्धो मणिलालमिश्रः।

गङ्गातटे कर्णपुरे निवासी

ग्रन्थस्य पूर्तिम्व्यकरोद्धि तस्य ॥३॥

चेदृष्टिदोषात्त्रुटिरस्तु काचि-

त्संशोध्यविज्ञैरवधारणीया ।

अत्रास्ति यः कोपि ममाऽपराधः

क्षन्तव्य आर्यैः कृपया नितान्तम् ॥४॥

भाषा—श्रीकान्यकुब्ज ब्राह्मणोंके श्रेष्ठ कुलमें शिवजीके सेवक (पं०) मातृदत्त हुए, विद्याकी निपुणतामें तत्पर पंडितोंमें प्रख्यात और विद्वानोंसे पूजित थे चरण जिनके, ऐसे॥ १ ॥ इनके आत्मज (पं०) बालमुकुन्द मिश्र सदाचार विचारमें दक्ष, पंडित, कृतज्ञ, श्रज्ञ, तथा गुणज्ञ, बुद्धिमान्, दयासागर, आदि अन्त जाननेवाले हुए ॥ २ ॥ तिनके पुत्र विद्वानोंके चरणसेवक प्रसिद्ध मणिलाल मिश्र गंगाजीके तट कानपुर (चौक) में निवास करनेवाले हितकारक ग्रन्थकी समाप्ति करते भये ॥ ३ ॥ मेरी दृष्टिके दोषसे यदि इसमें कोई त्रुटि हो तो वह शोधन करके विद्वानोंसे धारण की जाय इसमें जो कुछ मेरा अपराध हो वह श्रेष्ठ पुरुषोंसे कृपापूर्वक क्षमा किया जाय ॥ ४ ॥

# आशीर्वादावली

—————:※:—————

टं टं टंकारकारी विकृतविशिखधूचंडकोदंडधारी डिं डिं डिंकारवाद्ये स्वकरकमलस्तांडवेनान्वितो यः। श्रीमद्गौरीमुखाब्जप्रविदितमधुपो भालचन्द्रार्धमूर्धा शम्भुस्त्र्यम्बकः प्रयच्छत्वखिलजनपतिश्शूलपाणिः पुरारिः ॥ १ ॥ हुं हुं हुंकारनादप्रदलितदनुजो रामनुन्नः प्रपन्न उल्लंघ्याम्भोनिधानं दशमुखनगरं वह्निसात्सम्विधाय। फुं फुं फुंकारभावस्खलितखलमदः प्राप्तरामांघ्रिकञ्जः धीमान् श्रीमान् हनूमान् प्रदिशतु खलु वो रामपादप्रसादम् ॥ २ ॥ फुं फुं फुत्कारशब्दं वसति फणिपतिर्जायते यस्य कंठे डिं डिं डिम्पातिडिन्नं कलयति डमरुं यस्य पाणौ प्रकम्पाम्। तक् तक् तन्दा तिकिन्दा धिगिति धिगिति गीर्गीयते व्योमवाग्भिः कल्पान्ते ताण्डवीयस्सकलभयहरो भैरवो वः सपायात् ॥३॥ यस्याग्रे द्राट द्राट द्रुट द्रुटममलं टंट टंटं टटंटं डंसं डसं डुडंसं डुहि डुहि चाकितं भूपकं भूपनाकम्। तैलं तैलं तु तैलं खुखुखु खुखुखुमं खंखं खंखं खखंखं ध्यायन्ते विप्रगाहे वसति च शबलः पातु वश्चन्द्रचूडः ॥४॥ अंगुल्याः कः कपाटं प्रहरति कुटिलो माधवः किं वसन्तो नो चक्री किं कुलालो नहि धराणिधरः किं

द्विजिह्व फणीन्द्रः। नाहं घोराहिमर्दी किमसि खग-पतिर्नो हरिः किं कपीशः इत्थं राधावचोभिः प्रहसितवदनः पातु वश्चक्रपाणिः ॥ ५ ॥ सिंहादुत्थाय कोपाद्धधङ्धङ्धङ्द्धावनामा भवानी शत्रूणां शस्त्र-घातैस्तततङ्तङ्तङ्त्रोटयन्ती शिरांसि। तेषां रक्तं पिबन्ती घुघुःघुःघुं घोटयन्ती पिशाचांस्तृप्तांस्तृप्तान्हसन्ती खखल खलखलः शाम्भवी वः पुनातु ॥ ६ ॥ कं कं कां कां हसन्ती प्रहसितवदने भच्च-यन्ती कराली लुं लुं ह्रां ह्रां हरन्ती रिपुकुलदमनी खड्ग चक्रं शिरांसि। क्लीं क्लीं क्लीं कालरात्री भवभ-यहरणी वज्रहस्तं धरन्ती भक्तानां पालयन्ती सकलसुखकरी कालिका वः पुनातु ॥७॥ लक्ष्मीस्ते पंकजाक्षी निवसतु भवने भारती कंठदेशे वर्द्धन्तां बन्धुवर्गाः प्रबलरिपुगणा यान्तु पातालमूले। देशे देशे सुकीर्तिः प्रसरतु भवतां पूर्णकुन्देन्दुशुभ्रां जीवत्वं पुत्रपौत्रैः स्वजनपरिमितैर्भोज्यतां राज्य-लक्ष्मीः ॥८॥ यावल्लीलातरंगैर्वहति सुरनदी जाह्नवी पुण्यतोया यावच्चाकाशमार्गे तपति सुरवरो भास्करो लोकपालः। यावद्वज्रेन्द्रनीलस्फाटिकमणिशिला विद्य-ते मेरुशृंगे तावत्त्वं पुत्रपौत्रैः स्वजनपरिमितैर्भोज्य-तां राज्यलक्ष्मीः ॥९॥ यावत्तोयधराधरा धरधरा धा-

रा धराभूधरा यावच्चारु सुचारु चारु चमरं चामीकरं चामरम्। यावद्रावण राम रामरवणं रामायणं श्रूयते तावद्भोग विभोग भोगमतुलं भोगायते नित्यशः॥१०
मेघानाद घटाघटा घटघटा घाटाघटा घुर्घटा मण्डुकस्य वकोवको वकवको वाकोवाको वृवको। विद्युज्ज्योति चकीमकीचकमकी चाकीमकी दृश्यते इत्थं नन्दकिशोर गोपवनिता वाचस्पतिः पातु व॥११॥
स्वस्त्यस्तु ते कुशलमस्तु चिरायुरस्तु गोवाजिहस्तिधनधान्यसमृद्धिरस्तु। ऐश्वर्यमस्तु विजयोस्तु रिपुचयोस्तु काल्याणमस्तु सततं हरिभक्तिरस्तु॥१२॥
चरीकर्तु भव्यं सदाते रमेशो गणेशो जरीजर्तु विघ्नं त्वदीयम्। नरीनर्तु वाणी सदाते मुखाब्जे दरीदर्तु ते शत्रुवर्गान्महेशः॥१३॥दीर्घायुर्भव वृत्तिमान् भव सदा श्रीमान् यशस्वी भव प्रज्ञावान्भव भूरि सत्वकरुणादानैकशौंडो भव। भोगाढ्यो भव भावनोद्भव महा सौभाग्यशाली भव प्रौढश्रीर्भव कीर्तिमान्भव सदा कोटिम्मारिस्त्वं भव॥१४॥ अविरलमदधाराधौतगण्डः शरण्यः फणिवरकृतगात्रः सिद्धसाध्यादिवंद्यः। त्रिभुवनजनविघ्नध्वान्त विध्वंसदक्षो वितरतु गजवक्त्रः सन्ततं मङ्गलम्वः॥१५॥
इति मणिलालमिश्रेण संग्रहीताशीर्वादावली समाप्ता।

## भार्गव बुक डिपो में मिलनेवाली पुस्तकें—

### पुराण ।

तुलसीदास कृत रामायण भाषाटीका ८)

तुलसीदासकृत रामायण गुटका भाषा टीका ४)

तुलसीदासकृत रामायण मूल आठ काण्ड ३)

तुलसीदासकृत रामायण मूल छोटा गुटका १।)

रामायण गुटका तुलसीकृत १)

### तुलसीकृत रामायण के अलग अलग काण्ड ।

रामायण सुन्दरकाण्ड बड़ा मोटा अक्षर ≡)

" सुन्दरकाण्ड मझोला =)

" सुन्दरकाण्ड गुटका मोटा अक्षर =)

" किष्किन्धाकाण्ड बड़ा =)

" किष्किन्धाकाण्ड मझोला -)॥

" किष्किन्धाकाण्ड पाकेट साइज =)

" अयोध्याकाण्ड बड़े अक्षरों में ।=)

रामायण बालकाण्ड ।-)

रामायण आरण्य का० =)

रामायण लंकाकाण्ड ।-)

रामायण उत्तरकाण्ड ।-)

रामायण लवकुशकाण्ड ।)

कवितावली रामायण ।-)

दोहावली रामायण ≡)

छन्दावली रामायण ।-)

मनोहर रामायण ≡)

रामकलेवा ≡)

मानस शंकावली रामायण १)

### सप्तशती ।

दुर्गा सप्तशती रत्ना० बड़ी सांची २)

दुर्गा सप्तशती मझोली ॥)

" " सजिल्द १।)

दुर्गा सप्तशती गुटका ॥=)

दुर्गा सप्तशती ताबीजी या रेवड़िया ।-)

दुर्गा सप्तशती भा० टी० १।)

दुर्गा सप्तशती टीका १)

दुर्गा कवच )॥।

स्तोत्र रत्नाकर १॥)

गंगालहरी भाषा टीका ≡)

विष्णुसहस्रनाम ≡)

**नीचे लिखे स्तोत्र नित्य प्रति पाठ करने के योग्य हैं इनके पाठ से मनुष्य को किसी तरह का भय और कष्ट नहीं होता ।**

| | |
|---|---|
| गुटका भा० टी० सहित | १) |
| " मूल रेशमी जिल्द छोटी | ॥) |
| " केवल भाषा में । | १) |
| श्रीमत्भगवत् गीता पंच-रतन गुटका । मूल्य | ।) |
| तत्त्वबोध । सजिल्द | १) |
| योगवाशिष्ठ । मू० | १) |
| वेदान्तसार मू० | ≡) |
| नारद गीता । मूल्यः— | -) |
| मौन गीता । मू० | )॥। |
| कर्मकाण्ड नित्य कर्म पद्धति । मू० | =) |

नित्यकर्म में उपयोगी पुस्तकें

| | |
|---|---|
| एकोदिष्ट श्राद्ध मूल | -)॥ |
| " " सटीक | ≡) |
| गोदान | )॥ |
| गणपति पूजा | -) |
| जनेऊ पद्धति | =)॥ |
| मूल शान्ति | -) |
| वाशिष्ठी हवन पद्धति | ≡)॥ |
| समंत्रक ग्रह शांति प्रयोग | ॥) |
| चौबिसा गायत्री | ।) |
| पार्थिवपूजा भा० टी० | -) |
| तिथिनिर्णय | =) |
| दशकर्म पद्धति | ।=) |
| प्रेत मञ्जरी मूल | ।=) |
| " " भा० टी० | ॥) |
| पारवण मूल | -)॥ |
| " भा० टी० | ≡) |
| अशौचनिर्णय | ≡) |
| शनिश्चर कथा | =) |
| सिद्धान्त पटल | ≡) |
| पिण्ड दर्पण | ॥) |
| विवाह पद्धति मूल | ≡) |
| " " भा० टी० | ।≡) |

पुस्तकें मिलने का पता—

**भार्गव बुकडिपो,**

चौक, बनारस सिटी ।

मुद्रक—रा० कृ० गुर्जर, श्रीलक्ष्मीनारायण प्रेस, बनारस सिटी १२७१—२५
प्रकाशक—काशीप्रसाद भार्गव, भार्गव बुकडिपो, बनारस सिटी ।